अस्त्राणां संगमश्चैव घोरस्तत्राभवन्महान् ॥ २४
ततोऽर्जुनं द्वादशभी रुक्मपुङ्खैः सुतेजनैः ।
वासुदेवं च दशभिर्द्रौणिर्विव्याध भारत ॥ २५
ततः प्रहस्य बीभत्सुर्व्याक्षिपद्गाण्डिवं धनुः ।
मानयित्वा मुहूर्तं च गुरुपुत्रं महाहवे ॥ २६
व्यश्वसूतरथं चक्रे सव्यसाची महारथः ।
मृदुपूर्वं ततश्चैनं त्रिभिर्विव्याध सायकैः ॥ २७
हताश्वे तु रथे तिष्ठन्द्रोणपुत्रस्त्वयस्मयम् ।
मुसलं पाण्डुपुत्राय चिक्षेप परिघोपमम् ॥ २८
तमापतन्तं सहसा हेमपट्टविभूषितम् ।
चिच्छेद सप्तधा वीरः पार्थः शत्रुनिबर्हणः ॥ २९
स च्छिन्नं मुसलं दृष्ट्वा द्रौणिः परमकोपनः ।
आददे परिघं घोरं नगेन्द्रशिखरोपमम् ।
चिक्षेप चैव पार्थाय द्रौणिर्युद्धविशारदः ॥ ३०
तमन्तकमिव क्रुद्धं परिघं प्रेक्ष्य पाण्डवः ।
अर्जुनस्त्वरितो जघ्ने पञ्चभिः सायकोत्तमैः ॥ ३१ C. 9 737 B 9 14 33 K 9 13 31

24 For the sequence in Ś1 K1-3, cf v 1 20 D1 om 24 (cf v 1 23) — a) D5 ततो (for तयोर्) — c) T3 corrupt. K5 B2 Dn D2 5 6 10 11 शस्त्राणां (for अ ) Ś1 K1-3 मंश्च (K2 3 °च )यश्च (for °गमश्च) — d) K4 . B D (D1 om , D7 missing) T1. 2 पुन (for महान् )

25 For the sequence in Ś1 K1-3, cf v 1 20 — b) M1 रुग्म (for रुक्म ) K3 पुख , D10 पुंखै (for पुङ्खै ) D1 T1 सुतेर्नितै , D3 4 °जमै , T2 4 G M शिलाशितै (for सुतेजनै ) — c) D1 नवभिर् (for दश° ) — d) T1 G1 विव्याथ K5 D3 10 11 विव्याध भरतर्षभ

26 a) Ś1 K1-3 प्रणम्य , D10 11 °हर्षाद् (for °हस्य) — b) D3 प्राक्षिपद्, T G2 3 M1 विक्षिपन्, G1 विक्षिप्य (for व्याक्षिपद्) D1 गाजिव (for गाण्डिव) Dn D1 गाण्डी( Dn1 °ण्डी , D1 °जि )व व्याक्षिपद्धनु , M2-4 गाण्डीव विक्षिपन्व( M3 °द्व )नु — c) K2 . B3. 4 D3 4 10 11 T G तु, K4 स, Dn D1 . म, D5 om (for च) — d) S महारथ (G1 M2-4 °थ ) (for °हवे ) — After 26, D10 ins

82* निरुच्छ्वास तत कृत्वा गुरुपुत्र महामना ।
सोऽसृजत्सायकान्सप्त अर्जुनो जयता वर ।
चतुर्भि सायकैश्चैव ताडयामास घोटकान् ।

27 D10 reads from 27a up to the prior half of 83* twice B1 damaged for 27 — a) K3 विश्व- (sic), Dn3 अश्व (sic) (for व्यश्व ) K- -सूत (for -सूत ) — b) Dn2 n3 T3 सव्यसाचि (T3 °चिर्) (for °साची ) K. D2-4 10 (both times) 11 परतप (K5 °प), T1 2 4 G M महाहवे, T3 वल (for रथ ) — c) D10 (both times) मृदुपूर्व Ś1 K1-3 D1 चैव (for चैनं ) — d) T1 G1 विव्याथ Ś1 K1-3 त्रिभिस्त्रिभिरताडयत्, K5 D7 10 (both times) 11 पुन पुनर ताडयत्

28 For the repetition in D10, cf v 1 27 — a) D1 रथाश्वे (for हताश्वे ) Ś1 K1-3 ततस्तस्मिन् (for रथे तिष्ठन् ) — b) K5 B D2 8 9 तदास्मयन् (K5 °यं, D3 °स्त ), D1 ह्यविस्मयन्, T1 2 व्यवस्थित , T3 ह्यय स्मयं, T4 G [s]प्यय स्म( T4 यास्म )यन , M [s]प्य (M1 स्य )यस्मय (for स्वय° ) Dn D1 2 6 प्रगृह्य च अयोमयं, D5 भारद्वाजात्मजो बली — After 28b, D10 ins

83* यमदण्डनिभं घोर शत्रुसैन्यभयकरम् ।

[ For the repetition of the prior half, cf v 1. 27 ]
— B4 damaged from 28c up to 29d — c) Ś1 K1 मुसुल , K4 Dn1 n2 D1 3-5 9 10 मुशल , B (B4 damaged ) मुषल , D2 मुशळ D4 पाडुपुत्रस्य — d) D1 चिक्षेप गुरुनंदन

29 B4 damaged — a) Dn तदापतच्च सहसा — b) D1 -पट्टैर् (for पट्ट ) — c) S (except T1 2) पार्थो (for वीर ) — d) T3 4 G M2-4 वीर , M1 भीम (for पार्थ ) Dn3 T3 शत्रुर् (for शत्रु ) K2 निवर्हन , T3 बर्हिण

30 a) S (except T1 G1) सच्छिन्न Ś1 K1. 2 मुसुल , K3-5 Dn D1. 2-. 9 10 मुशल, B मुषल, D2 मुशळं, D3 मुषित — b) G1 द्रौणि परमकोपन — c) Ś1 K1 आदधे T2 परम (for परिघं ) — d) K5 B2 Dn1 D1 3 नागेंद्र , M1 शैलेन्द्र- (for नगेन्द्र- ) D3. 5 शिखरोपम D1 नागेंद्रस्य करोपम — K4 om 30ef — e) D1 M पार्थस्य (for पार्थाय ) — f) B4 damaged D1 क्रोधाद्द्रौणिर्महाहवे , M1 द्रौणि परमदुर्जय

31 a) K3 क्रुद्ध — b) Ś1 K1-3 वीक्ष्य (for प्रेक्ष्य ) — c) D3 त्वरतो, D1 तुरितो (for त्वरितो ) K3 जज्ञे (for जघ्ने ) — d) D3 corrupt

C 9 738
B 9 14 34
K 9 13 32

स च्छिन्नः पतितो भूमौ पार्थबाणैर्महाहवे ।
दारयन्पृथिवीन्द्राणां मनः शब्देन भारत ॥ ३२
ततोऽपरैस्त्रिभिर्बाणैर्द्रौणिं विव्याध पाण्डवः ।
सोऽतिविद्धो बलवता पार्थेन सुमहाबलः ।
न संभ्रान्तस्तदा द्रौणिः पौरुषे स्वे व्यवस्थितः ॥ ३३
सुधर्मा तु ततो राजन्भारद्वाजं महारथम् ।
अवाकिरच्छरव्रातैः सर्वक्षत्रस्य पश्यतः ॥ ३४
ततस्तु सुरथोऽप्याजौ पाञ्चालानां महारथः ।
रथेन मेघघोषेण द्रौणिमेवाभ्यधावत ॥ ३५
विकर्षन्वै धनुः श्रेष्ठं सर्वभारसहं दृढम् ।
ज्वलनाशीविषनिभैः शरैश्चैनमवाकिरत् ॥ ३६
सुरथं तु ततः क्रुद्धमापतन्तं महारथम् ।
चुकोप समरे द्रौणिर्दण्डाहत इवोरगः ॥ ३७
त्रिशिखां भ्रुकुटीं कृत्वा सृक्किणी परिलेलिहन् ।
उद्वीक्ष्य सुरथं रोषाद्धनुर्ज्यामवमृज्य च ।
मुमोच तीक्ष्णं नाराचं यमदण्डसमद्युतिम् ॥ ३८

---

32 ᵃ) T2 4 G2 3 M1 3 4 संछिन्न° — ᵇ) B1 4 D9 महामृधे (for °हवे) — ᶜ) Ś1 K1-3 द्रावयन्, T2 धार° (for दार°) K3 4 D5 पृथिवीं प्रा( D4 ग्रा )णान्, D11 (before corr ) °वीं द्रौणिर्, D11 (after corr ) °वीशाना (for °वीन्द्राणा) D4 शब्देन दारयन्राज्ञां — ᵈ) K4 5 B Dn D1-3 5 6 8-11 T1 2 मनांसीव च भारत, D1 मनांसि भरतर्षभ

33 ᵃ) T3 अतो (for ततो) K5 D7 10 11 भल्लैर् (for बाणैर्) — ᵇ) T1 G1 विव्याथ — ᶜ) K4 सोमि; K6 Dn D3 6 सोपि (for सोऽति ) D5 बळवता — ᵈ) K6 D3 T1 2 तु, T4 G2 स (for सु ) D2 महा बळ, D10 11 °त्मना (for °बल ) — ᵉ) Ś1 K3 नाभ्य (K6 °भि )भ्रमत्, K1 नाभ्यद्रवत, K2 नाभ्यभ्रमत, K4 D1 नासभ्रमत्, K5 B5 D7 10 11 नाकंपत, B3 श्रम भ्रातस्, D1 न चुक्षुभे, T G M1-4 न ( T3 स ) मुमोह, M1 न चचाल (for न संभ्रान्तस् ) D2 T3 तथा, D10 ततो (for तदा) — ᶠ) D10 11 T3 पौरुषेषु (for °षे स्वे)

34 B4 damaged for 34ᵃᵇ — ᵃ) K3 4 B1 2 5 D5 M2 4 सुरथस्, K6 B3 Dn D1-4 6 8-11 T1 2 M1 सु( D1 2 स, T2 स्व )रथं, T4 G सुशर्मा (for °धर्मा) K6 D3. 10 11 M1 च, Dn1 om (for तु) D1 तदा पार्थं, D6 T1 2 महाराज ( D6 °जन्), T3 4 G M1 3 4 तदा (T3 °था ) राजन् (for ततो रा ) — ᵇ) K4 5 B (B4 damaged ) Dn D2 3 6 8-11 T1 2 भारद्वाजो, D1 अश्व त्थामा, D4 द्रौणिरेव, G1 विजयं तं (for भारद्वाज) K4 5 B1 D2 6 8 9 T1-3 महारथ — Ś1 K1 2 om (hapl ) 34ᶜ-37ᵇ K3 reads 34ᶜ-35ᵇ twice — ᶜ) D2 M4 अवाकिरन्. D10 क्षुर- (for शर-) D4 S (except T3 G1) घातै (for व्रातै )

35 For the repetition in K3, cf v 1 34 Ś1 K1 2 om 35 (cf. v 1 34) B4 damaged for 35-36 — ᵃ) K4 च, D3 तौ (for तु) K6 T2 सरथो (for सु°) K4 B1 2 5 D2 4 9 T1 2 प्याजौ; Dn D ° राजन्; D1 नाम, D2 राजा (for ऽप्याजौ) — ᵇ) B1-3 D1 2 10 11 पंचालाना K3 (first time) महारथं, Dn2 D6 T1 G3 °रथा (for °रथ ) — ᶜ) S (except T1. 2) रथघोषेण महता — ᵈ) T3 4 G [अ]भ्ययाच्छ्रा ( T3 °था ) (for °धावत )

36 Ś1 K1 2 om 36 (cf v 1 34) D1 om 36 B4 damaged — ᵃ) K4 व्यपर्षन्वै, D2 विकरन्वै, D4 M °षन्( D4 र्षं, M1 °षं )श्च, T G °चकर्ष (for °क र्षन्वै) G1 श्रेष्ठ. — ᵇ) T2 हरं (for -सह) D1 दृढ Dn1 सर्वभारदृढं सहं — ᶜ) K3 D2 6 ज्वलनाशी ( D2 °शी ), D 4 10 °नाशी, Dn1 तलेनाशी, T1 2 ज्वल दाशी (for नाशी ) T1-3 G2 M1-4 समं (for निभं ) — ᵈ) K4 चैवम्; K D1 6 चैव, T2 4 G1 2 ह्यसन् (for चैनम् ) K4 T2 अवाकिरन्, K5 ह्यवाकिरन् Dn D2 5 6 शरौघैस्त( D2 3 घै स )मवाकिरत् ( D 3 °रन् ), D3 शरैश्चैवाभ्यवाकिरत्

37 Ś1 K1 2 om 37ᵃᵇ (cf v 1 34) — ᵃ) D10 11 G3 हं (for तु) K4 Dn D1 2 5 6 तदा, D4 M3 तथा (for तत ) K3 5 B D2 3 9 सुरथं वीक्ष्य संक्रुद्धम् — ᵇ) K4 दृष्ट्वायात (for आपतन्तं ) — ᶜ) B Dn1. n2 D1 2 5 6 8 चुक्रोध (for °कोप ) M1 चुकोप दृष्ट्वा द्रौणिस्तु — D2 om 37ᵈ-38ᶜ B4 damaged for 37ᵈ-39ᵇ

38 D2 om 38ᵃᵇᶜ (cf v 1 37) B4 damaged — ᵃ) D1 4 6 त्रिशाखा ( D5 °खा ); D7 10 शिखां (for °शिखां) Dn3 D1 4 5 10 भ्रुकुटिं — ᵇ) K2-5 B1 Dn D2 4 6 (marg ) 6 8-11 T1 G1 सृक्विणी ( D9 11 °णीं ), B1 3 5 सृक्कणीं (B3 °णी ), D1 T3 M3 सृक्कणी, D5 (orig ) सृग्विणी, T4 सृक्विणीं, G2 3 स्रक्विणीं( G3 °णी ), M1 2 4 स्रक्कणी (for सृक्किणी ) K4 5 B (B4 damaged ) D (except D6, D2 om, D7 missing ) T M -संलि हन् (for -लेलि° ) — ᶜ) K4 5 उदीक्ष्य, B ( B4

स तस्य हृदयं भित्त्वा प्रविवेशातिवेगतः ।
शक्राशनिरिवोत्सृष्टा विदार्य धरणीतलम् ॥ ३९
ततस्तं पतितं भूमौ नाराचेन समाहतम् ।
वज्रेणेव यथा शृङ्गं पर्वतस्य महाधनम् ॥ ४०
तस्मिंस्तु निहते वीरे द्रोणपुत्रः प्रतापवान् ।
आरुरोह रथं तूर्णं तमेव रथिनां वरः ॥ ४१
ततः सज्जो महाराज द्रौणिराहवदुर्मदः ।
अर्जुनं योधयामास संशप्तकवृतो रणे ॥ ४२
तत्र युद्धं महच्चासीदर्जुनस्य परैः सह ।
मध्यंदिनगते सूर्ये यमराष्ट्रविवर्धनम् ॥ ४३
तत्राश्चर्यमपश्याम दृष्ट्वा तेषां पराक्रमम् ।
यदेको युगपद्वीरान्समयोधयदर्जुनः ॥ ४४
विमर्दस्तु महानासीदर्जुनस्य परैः सह ।
शतक्रतोर्यथा पूर्वं महत्या दैत्यसेनया ॥ ४५ C 9 752 B 9 14 48 K 9 13 46

इति श्रीमहाभारते शल्यपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

---

damaged ) Dn D5 6 8 9 त वीक्ष्य ( for उद्वीक्ष्य ) Ś1 K1 स्व-, T2 G3 स- ( for सु ) T3 4 G1. 3 राजन् ( for रोपाद् ) D1 अश्वत्थामा ततो रोपाद् — d ) T2 धनुर्ज्याम् ( for °ज्यांम् ) K1 अवसृज्य, D0 सृज्य, Cn ( gloss अवकृष्य ) °मृज्य ( as in text ) — f ) K5 D3 10 11 G2 -दण्डोपम- ( for -दण्डसम ) T1 -प्रभं ( for -द्युतिम् ) B2 Dn1 n3 D1 2 5 ( marg as in text ) 6 यमदण्डसमं युधि

39 B4 damaged for 39ab — a ) D3. 5 भीत्वा ( for भित्त्वा ) — b ) K4 [अ]भिवेगत , K5 B ( B4 damaged ) Dn D3 6 8–11 T1. 2 [अ]तिवेगित , D1 धरातल, D5 [अ]तिवेगन , T3 4 G वेगवत्, M1 महीतलं, M2 4 [अ]तिवेगवान् ( for वेगत ) — D1 om ( hapl ) 39cd — c ) K3 4 B5 D4. 10 11 T2 M1 [उ]त्सृष्टो, Dn [उ]त्कृष्टा ( for [उ]त्सृष्टा ) D5 शक्राशनिसमोत्सृष्टो — d ) Ś1 तरणी ( for धरणी- ) K5 D8 तले, T2 -तळ ( for -तलम् ) M1 विदार्येव महीधर

40 a ) K4 5 B D ( D7 missing ) स पतितो ( for त पतित ) S ततस्तं ( T3 °स्तु ) निहत दृष्ट्वा — b ) K4 5 B D ( D7 missing ) समाहत , T3 4 G त( T4 र )थागत, M1 महारथ, M2–4 धरागत ( for समाहतम् ) — c ) K3 B2 T1 3 4 G1. 2 [ए]व, K4 5 Dn D1. 3 5 6 8 10 11 M1 च ( for [इ]व ) B4 5 T G2 3 M2–4 महा ( for यथा ) — d ) K5 Dn D1–3 5 6 8 9 11 निपातितं, B1 3–5 निपातनं, D4 महद्धुतं ( sic ), T G M2–4 महावने ( M3 °न ) ( for °धनम् ) B2 D10 पर्वतस्येव दीर्यत

41 B4 damaged for 41a–42b — a ) K5 B2 D3 10 11 त्रि- ( for तु ) B1 D4. 9 S ( except M2 ) शूरे ( for वीरे ) — d ) D1 तस्यैव ( for तमेव ) K5 वर, D5 वर ( for वर )

42 B4 damaged for 42ab — a ) Dn1 तदा, Dn2 n3 तव ( for तत· ) Ś1 K1–3 चैव, Dn D5 6 T1. 2 G1 सद्यो, D1 शल्यो, D4 सज्यं, D9 जरो ( sic ), T3 संध्यो, G3 सैन्द्रो ( for सज्जो ) — b ) D5 -मर्दन·, D6 -दुर्लभ ( for -दुर्मद ) — d ) K4 5 D1–5 9–11 T2 ससप्तक , Dn D6 त्रिगर्तक- ( for सशप्तक- ) D3 वृको, D4 -वृत, D9 -युतो ( for वृतो ) T1 सशप्तकमिवोरणे ( sic ), T3. 4 G M गणैर्वृत ( G1 3 °त )

43 a ) Ś1 K1–3 ततो, B1 तच्च, B2 तत्तु, M2 तस्य ( for तत्र ) D5 M1 महान् ( for महच् ) Ś1 K1–3 ह्यासीद्, D6 त्वा°, M1 भा° ( for चा ) — b ) B1–3 Dn D1 2 5 6 8 9 एकस्य बहुभि सह ( Dn °भ ) — G3 om. ( hapl ) 43c–45b — d ) K4 विवर्धने, D4 °र्धन· ( for °र्धनम् )

44 G3 om. 44 ( cf v l 43 ) B4 damaged for 44–45 — a ) Dn D1. 5. 6 अत्र ( for तत्र ) Ś1 K1–3 [अ]द्भुतम् ( for [आ]श्चर्यम् ) T3 अपश्यामो — b ) M3 राजस् ( for दृष्ट्वा ) M तस्य ( for तेषा ) — c ) Dn यदा, T2 यथा ( for यद् ) D4 वीर·, D8 एक ( for वीरान् ) — d ) K3 अर्जुन

45 G3 om 45ab ( cf v l 43 ) D1 om 45 B4 damaged. — a ) D2–4 10 11 सु , T1. 2 च ( for तु ) Dn D6 महाराज ( for नासीद् ) — b ) Ś1 K D3. 4 10 T1. 2 एकस्य बहुभि· सह, T4 विमर्दस्तु परै· सह — c ) D4 शक्रस्येव ( for शतक्रतोर् ) — d ) Ś1 K1 [अ]देव ; K2 [अ]सुर ( for दैत्य )

# १४

C. 9 753
B 9 15 1
K 9 14 1

संजय उवाच ।

दुर्योधनो महाराज धृष्टद्युम्नश्च पार्षतः ।
चक्रतुः सुमहद्युद्धं शरशक्तिसमाकुलम् ॥ १
तयोरासन्महाराज शरधाराः सहस्रशः ।
अम्बुदानां यथा काले जलधाराः समन्ततः ॥ २
राजा तु पार्षतं विद्ध्वा शरैः पञ्चभिरायसैः ।
द्रोणहन्तारमुग्रेषुः पुनर्विव्याध सप्तभिः ॥ ३
धृष्टद्युम्नस्तु समरे बलवान्दृढविक्रमः ।
सप्तत्या विशिखानां वै दुर्योधनमपीडयत् ॥ ४
पीडितं प्रेक्ष्य राजानं सोदर्या भरतर्षभ ।
महत्या सेनया सार्धं परिवव्रुः स पार्षतम् ॥ ५
स तैः परिवृतः शूरैः सर्वतोऽतिरथैर्भृशम् ।
व्यचरत्समरे राजन्दर्शयन्हस्तलाघवम् ॥ ६
शिखण्डी कृतवर्माणं गौतमं च महारथम् ।
प्रभद्रकैः समायुक्तो योधयामास धन्विनौ ॥ ७
तत्रापि सुमहद्युद्धं घोररूपं विशां पते ।

---

Colophon $D_7$ missing — *Adhy name* $K_4$ $M_{2-4}$ सुरथवध, $D_2$ अश्वत्थामापराजय, Bom ed सकुल युद्धम् — *Adhy no* (figures, words or both) $B_2$ 11, $B_5$ $Dn_3$ (after corr) 14, $Dn_1$ $n_2$ $n_3$ (before corr) $D_{4\ 10}$ S 13 (as in text) —*Śloka no* $K_5$ Dn 48, $D_5$ 47

## 14

☞ This adhy is missing in $D_7$ (cf v 1 9 1 1)

1 $^{b}$) $D_5$ दृष्टद्युम्नश्च $M_3$ पार्षद — $^{c}$) $D_{1\ 2}$ सुमहा, $D_5$ सहसा (for सुमहद्) — $^{d}$) $D_2$ -समाकुळं

2 $K_4$ om. 2 — $^{a}$) $K_2$ $D_{1\ 2}$ तयोरासीन्, Dn $D_8$ T G $M_3$ ततो राजन (for तयोरासन्) Dn महानासीत्, $D_{4\ 9}$ महारानन्, T G समापेतु, M विनिष्पे( $M_1$ °र्ये )-तु (for महाराज) — $^{b}$) $D_3$ om शर $T_4$ om. (hapl) from सहस्रश up to जलधारा (in $2^{d}$) $D_9$ समतत, $D_{10}$ सह** (for सहस्रश) — $Ś_1$ $K_{1-3}$ $D_9$ om (1 hapl) $2^{cd}$ — $^{c}$) $D_2$ काळे, $D_4$ [आ]काशे, $T_3$ चापि (for काले) — $^{d}$) $D_2$ जळ, $D_5$ $M_1$ वारि- (for जल) Dn $D_{1\ 2\ 5}$ $M_2$ सहस्रश, $M_1$ इवाशुगा (for समन्तत)

3 $D_1$ om 3 — $^{a}$) $D_{6\ 10\ 11}$ च (for तु) $T_3$ युद्ध्वा (for विद्ध्वा) — $^{b}$) $B_{4\ 5}$ $D_{3\ 10\ 11}$ $T_{3\ 4}$ G $M_{2-4}$ आशुगै (for आयसै) $T_{1\ 2}$ शरै संनतपर्वभि — $^{c}$) $K_2$ $D_{2\ 10}$ अग्रेषु, $K_{3-5}$ $B_{1\ 2}$ $D_{2\ 5\ 6\ 11}$ $T_{3\ 4}$ G $M_1$ उग्रेषु, $D_3$ अद्वेश (sic), $T_{1\ 2}$ उग्रैस्तु (for उग्रेषु) — $^{d}$) $T_1$ $G_1$ निव्याय $D_3$ पुरा विद्धाय सप्तभि

4 $^{a}$) K $D_5$ दृष्टद्युम्नस् $T_{1\ 2}$ $M_1$ च (for तु) — $^{b}$) $D_2$ बळवान् — $^{c}$) $D_{3\ 5\ 10}$ विशिषाना (for °खाना) $Ś_1$ $K_{1\ 2}$ तु (for वै) — $^{d}$) $D_4$ अताडयत् (for अपीड°)

5 $^{a}$) $B_4$ पतितं (for पीडितं) $Ś_1$ K $B_2$ $D_{3\ 4\ 10\ 11}$ वीक्ष्य (for प्रेक्ष्य) — $^{b}$) $K_5$ $Dn_2$ $n_3$ $D_{3-5\ 9}$ सौदर्या — $^{c}$) $K_2$ मार (sic), $B_{3\ 4}$ युक्तं, $D_6$ साक (for सार्धं) — $^{d}$) $D_9$ परिवभ्रु (for °वव्रु) $D_3$ S च (for स) $K_3$ $M_1$ पाडव, $T_4$ पार्थिवं (for पार्षतम्)

6 $^{a}$) $K_4$ $G_1$ क्रूरै, $K_5$ B D ($D_7$ missing) $T_2$ M शूर (for शूरै) — $^{b}$) $K_1$ रवैर्, $D_3$ रथं (for रथैर्) — $^{c}$) Dn $D_{1\ 2\ 5}$ $M_3$ व्यधमत्, $M_1$ व्याचरत् (for व्यच°) $D_1$ शत्रून (for राजन्) — $^{d}$) $K_4$ तत्र, $K_5$ B $D_{1-6\ 9-11}$ $G_{1\ 3}$ M अस्त्र (for हस्त) $T_4$ लास यंत च लाघवं

7 $D_1$ om 7–8 — $^{a}$) $D_{10}$ शिपडी $G_3$ -धर्माणं (for वर्माणं) — $^{b}$) $K_2$ गोतम $D_3$ om. च — $^{c}$) $Dn_1$ $D_2$ समायुक्तौ, $D_9$ °युक्ते, $T_3$ °युक्तैर्, $T_4$ महाराजो (for समायुक्तो) — $^{d}$) $D_3$ घोपयामास (for योध°) $T_3$ धान्विन, $G_3$ °भि (for °नौ)

8 $D_1$ om 8 (cf v 1 7) $D_{11}$ om. 8 — $^{a}$) $Ś_1$ $K_{1-3}$ तत्रैव, $K_4$ तथापि, $D_4$ $T_{1\ 2}$ $G_2$ तमासीत् (for तत्रापि) $K_2$ $D_3$ सुमहा- (for सुमहद्) — $^{c}$) $D_9$ प्राण (for प्राणान्) $K_{4\ 5}$ $Dn_1$ $D_3$ सत्यज्यतो ($K_4$ °ता), $Dn_2$ $n_3$ $T_{1\ 4}$ G °जतो, $D_5$ $T_{2\ 3}$ $M_{1\ 2}$ °जतोर्, $M_4$ °जतौ (for °जतां) $D_4$ प्राणान्सत्यज्य युद्धे तु — $^{d}$) $K_4$ घाताद्रि-, $B_1$ घृताति-, $D_3$ -दाताभि-, $D_{10}$ $T_{1\ 2\ 4}$ $G_1$ $M_1$ द्यूताधि, $G_3$ द्यूताय (sic) (for -द्यूताभि) $K_6$ $D_4$ -देविना, Dn $D_{2\ 5}$ देवनं, $T_4$ -दैवतं, $G_3$

प्राणान्संत्यजतां युद्धे प्राणद्यूताभिदेवने ॥ ८
शल्यस्तु शरवर्षाणि विमुञ्चन्सर्वतोदिशम् ।
पाण्डवान्पीडयामास समात्यकिवृकोदरान् ॥ ९
तथोभौ च यमौ युद्धे यमतुल्यपराक्रमौ ।
योधयामास राजेन्द्र वीर्येण च बलेन च ॥ १०
शल्यसायकनुन्नाना पाण्डवानां महामृधे ।
त्रातारं नाध्यगच्छन्त केचित्तत्र महारथाः ॥ ११
ततस्तु नकुलः शूरो धर्मराजे प्रपीडिते ।
अभिदुद्राव वेगेन मातुलं माद्रिनन्दनः ॥ १२
संछाद्य समरे शल्यं नकुलः परवीरहा ।
विव्याध चैनं दशभिः स्मयमानः स्तनान्तरे ॥ १३
सर्वपारशवैर्बाणैः कर्मारपरिमार्जितैः ।
स्वर्णपुङ्खैः शिलाधौतैर्धनुर्यन्त्रप्रचोदितैः ॥ १४
शल्यस्तु पीडितस्तेन स्वस्रीयेण महात्मना ।
नकुलं पीडयामास पत्रिभिर्नतपर्वभिः ॥ १५
ततो युधिष्ठिरो राजा भीमसेनोऽथ सात्यकिः ।
सहदेवश्च माद्रेयो मद्रराजमुपाद्रवन् ॥ १६
तानापतत एवाशु पूरयानाञ्चथस्वनैः । C 9 769 B 9 15 17 K 9 14 17

देवने , M1 -देविनो (for -देवने) T3 परस्परवधैषिणो , G2 पणद्यूता दिने दिने

9 a) D10 11 सायक (for तु शर) — b) T3 4 G2 न्मृशं (for दिशम्) — c) D2 पीडयामासु , G2 योधयामास (for पीडया°) — d) Ś1 K1-3 सहोदरान्, D8 -वृकोदरं (for °दरान्) K4 . Dn D1 2 5 सात्यकिं च वृकोदर

10 D1 om. 10 — a) D4 तथैव, D10 11 G2 तथा तौ, T4 ततोभौ, G1. 8 तत्रोभौ (for तथोभौ) Dn D4 5 6 10 11 तु (for च) T3 तथा यार्णयमौ युद्धे — b) Ś1 K1 2 यमतुल्यौ पराक्रमे — c) D3 T1. 2 समरे (for राजेन्द्र) — d) B Dn D2 6 8 9 धैर्येण (for वीर्येण) K4 . D2 4 10 11 S [स]त्र , D4 स्व (for च) D2 बळेन च, D3 महाबलौ (for बलेन च)

11 a) B1. 4 D10 -शायक (for सायक) T1 2 -भिन्नाना (for -नुन्नाना) — b) K2 महा* *, M1 महाहवे (for °मृधे) — c) D3 4 त्राता( D3 °त )र (for त्रातार) Ś1 K1-3 M2 नाभ्यगच्छंत, B3 D1 2 4 6 T4 नाधिगच्छति (D1 T4 °त, D6 °त ), Dn1 नोपगच्छत (for नाध्य°) — d) Ś1 K1. 3 D2 कश्चित्तत्र, T1. 2 तत्र केचित्त (by transp ) D4 M2 4 नराधिपा (for महारथा )

12 a) D2 नकुळ T3 4 G1 3 राजन् (for शूरो) — b) K3 प्रपीड्यते (for °डिते) — c) D6 अति (for अभि ) — d) Ś1 K1 2 4 5 B4 Dn D1 4-6 10 मातृ , D2 भ्रातृ (for माद्रि ) After माद्रि, T1 reads 28f–29a for the first time, repeating it in its proper place Dn -नन्दक

13 a) K4 संसाद्य, K5 आसाद्य; B (except B2) Dn D1-3 5, 6 8 9 आच्छाद्य (for संछाद्य) B4 D10 11 वीर (for शल्य) — b) D2 नकुळ — c) T1 G1 विव्याय Ś1 K1. 2 D4 विव्याध दशभिश्चैनं (D4 °स्तीक्ष्णै )

14 D1 om 14 — a) Ś1 पारगवैर्, K1 4 5 B2 4 5 Dn D4-5 10 11 T1 G1 °सवैर्, D8 शरैर्, D9 °शतैर्, T2 °वशैर् (for °शवैर्) D6 सर्वपारसवर्षाणि — b) K2 कदार (sic) (for कर्मार ) D3 वर्जितै , T4 निष्ठितै (for मार्जितै ) — c) D10 -पुषै (for पुङ्खै ) D4 तैल (for शिला ) S सुवर्णपुखैर्निशितैर् — d) T4 बाहु (for धनुर् ) D6 चार्य, G3 -यत्रै (for यन्त्र ) K5 Dn D9 5 प्रनो( Dn °णो )दितै , T G1. 8 -प्रपीडितै (for -प्रचोदितै )

15 b) Ś1 K1 2 D3 T2 स्वस्रेयेण (Ś1 K1 °न), K5 D1. 5 10 M3 स्वस्रीयेन, M1 स्वस्रियेण (for स्वस्री ) T1-3 G हि (G1 3 तु) मातुल (T2 ळ ), T4 महाबळ (for °त्मना) — c) D2 नकुळ — d) K1 2 सप्तभिर्, D4 T3 4 G M त्रिभि स , T1 2 शरै स- (for पत्रिभिर्)

16 b) D2 T3 4 G M1 च (for ऽथ) — D1 5 6 om 16c–17b — c) Ś1 K2 M2-4 तु (for च) K3 T3 माद्रीयो, G2 नकुलो (for माद्रेयो) — d) B4 5 Dn D2-4 8 उपाद्रवत्, T4 G उपेयिवान्, M3 उपागमत् (for द्रवन्) Ś1 K1-3 मद्रराज (K3 °जं) प्रतापवान्, T3 शल्यं मद्रपमेयिवान्, M1 माद्रराजमभिद्रवत्

17 D1 5 6 om 17ab (cf v 1 16) — b) Ś1 K1. 2 * * * *न्, K3 शीघ्रयानान्, B1 3 4 D3 11 पूरयाणान्, B5 पूरया*न्, D9 °माणास् (for यानान् ) D2 अथ, D9 तथा (for रथ ) K4 पूरयामासतु शरै , K5 B2 पूरयामास सायकै , D8 पूरय विरथस्वनै (sic), D4 स पूरयन्नयनि स्वनै (hypermetric) — D3 reads 17c–18b after 28d — c) K5 B3-5 Dn D2 11 विदिशश् (for प्रदि°) — d) K4 कंपमाना च, B1. 5 D8 °मानाश्च, D1

C 9 769 B 9 15 17 K. 9 14 17 दिशश्च प्रदिशश्चैव कम्पयानांश्च मेदिनीम् ।
प्रतिजग्राह समरे सेनापतिरमित्रजित् ॥ १७
युधिष्ठिरं त्रिभिर्विद्ध्वा भीमसेनं च सप्तभिः ।
सात्यकिं च शतेनाजौ सहदेवं त्रिभिः शरैः ॥ १८
ततस्तु सशरं चापं नकुलस्य महात्मनः ।
मद्रेश्वरः क्षुरप्रेण तदा चिच्छेद मारिष ।
तदशीर्यत विच्छिन्नं धनुः शल्यस्य सायकैः ॥ १९
अथान्यद्धनुरादाय माद्रीपुत्रो महारथः ।
मद्रराजरथं तूर्णं पूरयामास पत्रिभिः ॥ २०
युधिष्ठिरस्तु मद्रेशं सहदेवश्च मारिष ।
दशभिर्दशभिर्बाणैरुरस्येनमविध्यताम् ॥ २१
भीमसेनस्ततः षष्ट्या सात्यकिर्नवभिः शरैः ।
मद्रराजमभिद्रुत्य जघ्नतुः कङ्कपत्रिभिः ॥ २२
मद्रराजस्ततः क्रुद्धः सात्यकिं नवभिः शरैः ।
विव्याध भूयः सप्तत्या शराणां नतपर्वणाम् ॥ २३
अथास्य सशरं चापं मुष्टौ चिच्छेद मारिष ।
हयांश्च चतुरः संख्ये प्रेषयामास मृत्यवे ॥ २४
विरथं सात्यकिं कृत्वा मद्रराजो महाबलः ।
विशिखानां शतेनैनमाजघान समन्ततः ॥ २५
माद्रीपुत्रौ तु संरब्धौ भीमसेनं च पाण्डवम् ।

---

°यामास, $D_{4}$ °यतश्च, $D_{5\ 6\ 10}$ °यानाश्च (for °यानांश्च) $K_{4\ 5}$ $D_{3\ 4\ 10}$ मेदिनी — $^{c}$) $B_{1}$ $D_{9}$ अभि (for प्रति-)

18 For the sequence in $D_{8}$, cf v l 17 — $^{b}$) $K_{4\ 5}$ $D_{3\ 10\ 11}$ $T_{1\ 2}$ $M_{8}$ पचभि (for सप्त°) — $^{d}$) $K_{5}$ च पंचभि (for त्रिभि शरै)

19 $^{a}$) Dn $D_{6}$ मद्रस्, $D_{1}$ शल्यस् (for ततस्) — $^{c}$) $M_{1}$ माद्रेश्वर• $B_{1}$ क्षुरप्रेण — $^{d}$) $D_{4}$ S मध्ये (for तदा) $D_{10}$ तदा मारिष चिच्छिदे — $D_{1}$ om $19^{ef}$ $T_{3}$ om (hapl) $19^{e}$–$21^{b}$ — $^{e}$) $D_{4}$ तत• शीर्यंत; $D_{5}$ तदाशी° (for तदशी°) $D_{2}$ विच्छन्न $T_{1\ 2\ 4}$ $G_{1\ 3}$ तदपास्य धनुश्छिन्नं — $^{f}$) $G_{1\ 3}$ तत• (for धनु)

20 $T_{3}$ om 20 (cf. v l 19) $K_{2}$ om (? hapl.) 20 — $^{a}$) $D_{4}$ अन्य- (for अन्यद्) — $^{b}$) $T_{1\ 2}$ महावल (for °रथ) — $^{c}$) $M_{1}$ माद्रराज $K_{4}$ रथात्, $D_{8}$ रथांस् (for रथ) $B_{2}$ मद्रेश्वरध्वज तूर्णं — $^{d}$) $Ś_{1}$ $K_{1,\ 3}$ सायकै (for पत्रिभि)

21 $T_{3}$ om $21^{ab}$ (cf. v l 19) $D_{1}$ om (hapl) 21–22 — $^{a}$) $Ś_{1}$ $K_{1}$ युधिष्ठिरश्च, $K_{4}$ °ष्ठिरस्य (sic) $D_{10}$ om (hapl) from मद्रेशं up to शरै (in $22^{b}$) $D_{8}$ मद्रेण, $G_{2}$ समरे, $M_{1}$ माद्रेश (for मद्रेशं) — $^{b}$) $D_{4\ 9}$ तु (for च) $T_{2}$ (also as in text) भारत (for मारिष) — $^{c}$) $D_{4}$ S (except $T_{4}$ $G_{3}$) मल्लैर् (for बाणैर्) — $^{d}$) $T_{1\ 2}$ तदा तूर्णम् (for उरस्येनम्) $D_{2}$ अविध्यत, $D_{5}$ अवध्यता, $T_{3\ 4}$ G अपीडयत् (for अविध्यताम्)

22 $D_{1}$ om. 22, $D_{10}$ om. $22^{ab}$ (for both, cf. v. l. 21). — $^{a}$) $K_{3-5}$ B Dn $D_{2, 3, 5, 6, 8, 9, 11}$ तु सं; $D_{4}$ तथा; $T_{1\ 2}$ तदा; $T_{3}$ $G_{1}$ चतु• (for तत.). — $^{b}$) $K_{2}$ $D_{4}$ सात्यर्कि (sic) $K_{5}$ $D_{11}$ दशभि (for नव°) — $B_{5}$ om (hapl) $22^{c}$–$23^{b}$ $M_{8}$ reads $22^{cd}$ after 23 — $^{c}$) $T_{3\ 4}$ $G_{1\ 2}$ मद्रेश्वरम्, $M_{1}$ माद्रराजम् (for मद्र°)

23 $B_{5}$ om $23^{ab}$ (cf. v l 22) $M_{3}$ om (hapl) $23^{ab}$ — $^{a}$) $G_{1}$ मद्रराजं, $M_{1}$ माद्रराजस् $D_{4}$ तथा, $G_{1,\ 3}$ पुन, $G_{2}$ तदा (for तत) — $^{b}$) $D_{4}$ $G_{1}$ $M_{1}$ सात्यकिर् $T_{1\ 2}$ दशभि, $M_{2\ 4}$ निशितै (for नवभि) — $^{c}$) $T_{1}$ $G_{1}$ विव्याथ — After 23, $M_{8}$ reads $22^{cd}$

24 $^{a}$) $K_{4}$ सरथं, $T_{3\ 4}$ G $M_{2-4}$ समरे (for सशर) $T_{3}$ $G_{1}$ चाप (for चापं) — $^{b}$) $B_{5}$ $G_{3}$ अष्टौ (sic), $T_{3}$ $G_{1}$ -यष्टिं (for मुष्टौ) $D_{4}$ सायकै, $T_{4}$ मुष्टिना, $M_{1}$ भारत (for मारिष) — $^{c}$) $T_{4}$ संघे, $G_{1\ 3}$ सद्य, $G_{2}$ M सखे (for संख्ये)

25 $^{a}$) $B_{3}$ $D_{5}$ विरथिं — $^{b}$) $M_{1}$ माद्रराजो $Ś_{1}$ $K_{1-3}$ महाबल, $K_{5}$ $B_{3}$ $D_{3\ 10\ 11}$ S (except $T_{1,\ 2}$) °रथ (for °बल) — $^{c}$) $K_{5}$ $D_{3-5\ 10}$ विशिपानां (for °खानां) $K_{4\ 5}$ Dn $D_{2-4\ 6\ 8}$ $G_{3}$ शतेनैवम्, $T_{4}$ शतं चैवम्, $G_{2}$ शतैस्तूर्णं (for शतेनैनम्) — $^{d}$) $D_{3}$ जघान च, $G_{2}$ निजघान (for आज°) B (except $B_{2}$) $D_{9}$ महाबल (for समन्तत)

26 $^{a}$) $G_{1}$ (before corr as in text) $_{3}$ -पुत्रं (for पुत्रौ) $K_{4}$ Dn $D_{1,\ 2\ 4-6\ 8}$ $T_{1\ 2}$ सु, $K_{5}$ $D_{3\ 10\ 11}$ $T_{3\ 4}$ G M च (for तु) $T_{4}$ G M संक्रुद्धौ ($G_{1\ 3}$ °द्धो) (for संरब्धौ) — $^{b}$) $T_{4}$ $G_{3}$ भीमसेनश् $Ś_{1}$ $K_{1-3}$ तु (for च). — $^{c}$) $B_{4,\ 5}$ Dn $D_{1-6,\ 9}$ S (except $T_{1}$ $M_{1}$) कौरव्यं. — $^{d}$) $T_{1}$ $G_{1}$ विव्याथ. $D_{4}$ S निशितैः (for दशभिः).

युधिष्ठिरं च कौरव्य विव्याध दशभिः शरैः ॥ २६
तत्राद्भुतमपश्याम मद्रराजस्य पौरुषम् ।
यदेनं सहिताः पार्था नाभ्यवर्तन्त संयुगे ॥ २७
अथान्यं रथमास्थाय सात्यकिः सत्यविक्रमः ।
पीडितान्पाण्डवान्दृष्ट्वा मद्रराजवशं गतान् ।
अभिदुद्राव वेगेन मद्राणामधिपं बली ॥ २८
आपतन्तं रथं तस्य शल्यः समितिशोभनः ।
प्रत्युद्ययौ रथेनैव मत्तो मत्तमिव द्विपम् ॥ २९
स संनिपातस्तुमुलो बभूवाद्भुतदर्शनः ।
सात्यकेश्चैव शूरस्य मद्राणामधिपस्य च ।
यादृशो वै पुरा वृत्तः शम्बरामरराजयोः ॥ ३०
सात्यकिः प्रेक्ष्य समरे मद्रराजं व्यवस्थितम् ।
विव्याध दशभिर्बाणैस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३१
मद्रराजस्तु सुभृशं विद्धस्तेन महात्मना ।
सात्यकिं प्रतिविव्याध चित्रपुङ्खैः शितैः शरैः ॥ ३२
ततः पार्था महेष्वासाः सात्वताभिसृतं नृपम् ।
अभ्यद्रवन्रथैस्तूर्णं मातुलं वधकाम्यया ॥ ३३
तत आसीत्परामर्दस्तुमुलः शोणितोदकः ।
शूराणां युध्यमानानां सिंहानामिव नर्दताम् ॥ ३४
तेषामासीन्महाराज व्यतिक्षेपः परस्परम् । C 9 729 B 9 15 37 K 9 14 35

27 a) K2 D2 3 10 [अ]द्भुतम् T3 G2 अपश्यामो — b) M1 माद्रराजस्य — c) D3 विहिता (for सहिता) K4 सर्वे, T4 G1 पार्थान् (for पार्था) K6 D3 M2-4 यदेतान्स(K6 °न स, D3 °क न)हितान्पार्थान् — d) K1 D10 नान्ववर्तं(D10 °र्तं)त, K5 D3 G1 M2-4 अभ्यवर्तन्त, T3 न व्यवध्यन्त (for नाभ्यवर्तन्त)

28 c) K2 द्रष्टु, K5 वीक्ष्य (for दृष्ट्वा) — After 28d, D3 reads 17c–18b T1 reads 28f–29a for the first time after माद्रि (in 12d) — f) K4 D3 अधिपो K6 D10 11 बलात् (for बली)

29 For the repetition in T1, cf v. l 28 — a) D1 यत्र वीर, G3 रथ तस्य, M3 4 रथस्थं तु (for रथं तस्य) — b) K4 T2 समि(K4 स जि)त, G1. 3 समर (for समिति) Ś1 K1-3 -कोपन, K4 शोभित (for -शोभन) — c) D4 रथ त तु, S (except M1) रथेनै (T1 °थे नू)नं (for नैव)

30 a) Dn1 n3 D3 तुमलो D4 संनिपातस्तु समलो, T3 °पातस्तु समरे तुमुलो (hypermetric) — b) K2 D3 4 [अ]द्भुत D3 दर्शन — c) D3 om शूरस्य K4 सात्यकि शूरसेनश्च — d) M1 माद्राणाम् Ś1 K1-3 मद्रराजस्य चानघ — Ś1 K1-3 D1 om 30ef — f) K4 D3 6 मयरामर (for शम्ब°)

31 a) B5 D4 सात्यकिं Ś1 K1-3 सात्यकिश्च महाराज. — b) D4 मद्रेश्वरम् (for मद्रराज) B2. 5 D3 4, 9-11 S समवस्थित — c) T1 G1 विव्याथ. S निशितैर् (for दशभिर्). — d) D9 तिष्ठतिष्ठ वचोऽब्रवीत्.

32 a) D2 मद्री ; M1 माद्र (for मद्र). D3 संभृशं, G1 3 समरे (for सुभृशं) D2 मद्रराजो भृशं विद्धो — b) D2 रणे (for विद्धस्) D4 विद्ध सात्यकिना रणे — c) T1 G1 प्रतिविव्याथ — d) K2 शिलाशितै, Dn शिली-मुखै, D3 5 श(D5 सि)तै शरै (for शितै शरै) D4 S विंशत्या निशितै शरै

33 a) D8 T2 तत पार्थो महेष्वास — b) K4 G2 त्वरिताभि, T3 4 पार्थिवाभि (for सात्वताभि-) T G1. 3 सुखं (for -सृतं) D3 सायकैश्चापि विक्षितं, M1 चापानुयस्य मारिष — T4 om 33cd — c) K4 Dn D5 T2 अभ्यद्रवद्, K5 D8 10 11 °वर्तन्, D4 परिवव्रु (for अभ्यद्रवन्) K4 रथं, D1 तदा, D5 रणे, D8 T2 रथे (for रथैस्) — d) D2 T2 मातुळं K2 5 D10 11 G2 3 -काङ्क्षया (for -काम्यया) M1 मद्रराजवधेप्सया

34 D1 om. 34 — a) D6 M2 तत्र (for तत) K4 D4 चासीत् (for आसीत्) T1 तु सं-, T2 सुसं, M2 4 परो (for परा-) Dn D2 5 तत्रासीत्स्वप(D2 °स्मप-; D5 °स्स प)रामर्दस् — b) Dn D2 5 तुमल, D3 तुमूल D4 तुमल शोणितोदकं, M8 तुमुलं शोणितोदत — c) Ś1 K1-4 B2 Dn D3 4-6 नराणा (for शूराणा) K6 युद्धतां चैव, B1 वध्यमानाना, M8 विध्य° (for युध्य°) — d) K5 सिंहनादम् (hypermetric) (for सिंहानाम्) T1 2 गर्ज(T1 °र्जि)तां (for नर्द°) T3 4 G नर्द(G2 3 °द)तामितरेतरं

35 a) T2 चासन् (for आसीन्). K6 महाराजन् ; D1 महाक्षेप. ; D4 ततो राजन् (for महाराज). — b) Dn M2 व्य(Dn1 व्या)धिक्षेपः ; G3 व्यतिषेध. (for °क्षेप). D1 सिंहनादेन नर्दतां (cf. 34d). — c) D6 आमिषेच्छूना ; T3 अच्छमछाना (for आमिषेप्सूनां) — d)

C. 9 729 D 9 15 37 K. 9 14 35 सिंहानामामिषेप्सूनां कूजतामिव संयुगे ॥ ३५
तेषां बाणसहस्रौघैराकीर्णा वसुधाभवत् ।
अन्तरिक्षं च सहसा बाणभूतमभूत्तदा ॥ ३६
शरान्धकारं बहुधा कृतं तत्र समन्ततः ।
अभ्रच्छायेव संजज्ञे शरैर्मुक्तैर्महात्मभिः ॥ ३७
तत्र राजञ्शरैर्मुक्तैर्निर्मुक्तैरिव पन्नगैः ।
स्वर्णपुङ्खैः प्रकाशद्भिर्व्यरोचन्त दिशस्तथा ॥ ३८
तत्राद्भुतं परं चक्रे शल्यः शत्रुनिबर्हणः ।
यदेकः समरे शूरो योधयामास वै बहून् ॥ ३९
मद्रराजभुजोत्सृष्टैः कङ्कबर्हिणवाजितैः ।
संपतद्भिः शरैर्घोरैरवाकीर्यत मेदिनी ॥ ४०
तत्र शल्यरथं राजन्विचरन्तं महाहवे ।
अपश्याम यथा पूर्वं शक्रस्यासुरसंक्षये ॥ ४१

इति श्रीमहाभारते शल्यपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

---

Ś1 K स्फूर्जं( K4 °र्यं )ताम्; T1 2 गर्जं° ( for कूज° ) Dn D2 5 6 गर्जतामिव कूजता, D1 यथान्योन्य सुगर्जता.

36 a) K5 D4 तयोर्, T2 ततो ( for तेषां ) K2 -सहस्रौघा; B1 °सैस्तैर्, T4 °स्रा वै ( for °स्रौघैर् ). — b) M1 मास्तीर्णा ( for °कीर्णा ). — c) K5 मंतरिक्षे; B1-3 D2 °रीक्षं. K4 महता ( for सहसा ) — d) D4 T3 G M बाणावृतम्; T4 बाणव्रातम् ( for °भूतम् ) D3 महत् ( for अभूत् ) D4 भृश ( for तदा ). B2 सर्वं बाणमयं तदा

37 a) Ś1 K1-3 शरासा( K3 °शा )र च, K5 D4 S शराधकारे, D2 बाणाधकारे ( for शरान्धकारं ) K5 Dn D1, 2 5 6 10 11 सहसा; T1 2 महति ( for बहुधा ) — b) K5 D2 4 S कृते ( for कृतं ) K6 D10 11 तेनं ( for तत्र ) T4 समन्वित — d) B2 T1 G1, 3 M पूर्णे, D4 T2-4 पूर्णैर्, D9 युक्तैर्; G2 पूर्णं ( for मुक्तैर् ) D6 om from महात्मभि. up to चक्रे ( in 39a ) T4 महारथै, M1 नभस्तले ( for महात्मभिः ).

38 D6 om. 38 ( of v. l 37 ) D1 om 38 — a) K4 युक्तं ( for मुक्तैर् ) Dn D2 शरैर्मुक्तैस्तत्र राजन् — b) K2 om., Dn D2 5 विमुक्तैर् ( for निर्मु° ) T3 4 G1 3 निर्मुक्तोरगसंनिभै — c) T G रुक्म ( for स्वर्ण- ). D10 पुंपै ( for -पुङ्खै ) M1 सुवर्णपुंखैर्विदिशो; M2-4 रुक्म ( M3 °क्म )पुंखैर्व्यराजंत — d) K2 corrupt. K5 D5 व्यरोचत; Dn T1 2 G2 व्यराजंत; M1 विराजंति ( for व्यरोचन्त ). Ś1 K1, 3 D2 G2 दश; B2, 3 Dn3 D5, 10, 11 वदा ( for तथा ) T1, 4 G1 3 व्य( G1 वि )राजत विपश्चदा M2-4 दिशश्च प्रदिशस्तथा

39 D6 om 39a ( cf v. l 37 ). — a) D3 तत्रा द्भुतं T3 तत्राद्भुततरं चक्रे — b) K2 निबर्हणं, T °र्हिण ( for °र्हण ) — c) G1 3 राजन् ( for शूरो ) — d) D2 वैर् ( for वै ) T G1 3 [ऽ]योधयद्वै व बहून्

40 D1 om 40 B1 reads 40ab on marg — a) M1 माद्रराज ( for मद्र° ) T4 मद्रराज च मरसृष्टै — b) Dn D5 बर्हण ( for बर्हिण ) B2 राजिभि, D वाजिभि, T4 वासितं ( for वाजितं ) — d) K1 Dn D2 5 9 10 T4 G1 3 अवाकीर्यंत D3 अवकीर्य मेदिनीं

41 a) T3 4 G1 3 तत ( for तत्र ). Dn2 T3 शल ( for शल्य- ) T1 2 घोरं ( for राजन् ) — b) T4 मह घलं ( for °हवे ) — c) K4 G1 अपश्यामो Dn D5 पुरा ( D5 °रो ) यद्वत्; D1 2 पुरा युद्धे, D4 अयापू ( for यथा पूर्वं ) T3 अपश्यामोदयापूर्वं — d) D शार्ङ्गं च ( for शक्रस्य ) M1 सुर- ( for [अ]सुर ) K1-3 शर्वस्य पुरसंक्षये; D1 शक्रस्येवासुरक्षये

Colophon D7 missing. — *Adhy name* M2- एकानेकयुद्ध, Bom ed संकुलयुद्धम् — *Adhy n* ( figures, words or both ) B5 15; Dn D4 10 14 ( as in text ). — *Śloka no.* K6 Dn 43.

# १५

संजय उवाच ।
ततः सैन्यास्तव विभो मद्रराजपुरस्कृताः ।
पुनरभ्यद्रवन्पार्थान्वेगेन महता रणे ॥ १
पीडितास्तावकाः सर्वे प्रधावन्तो रणोत्कटाः ।
क्षणेनैव च पार्थांस्ते बहुत्वात्समलोडयन् ॥ २
ते वध्यमानाः कुरुभिः पाण्डवा नावतस्थिरे ।
निवार्यमाणा भीमेन पश्यतोः कृष्णपार्थयोः ॥ ३
ततो धनंजयः क्रुद्धः कृपं सह पदानुगैः ।
अवाकिरच्छरौघेण कृतवर्माणमेव च ॥ ४
शकुनिं सहदेवस्तु सहसैन्यमवारयत् ।
नकुलः पार्श्वतः स्थित्वा मद्रराजमवैक्षत ॥ ५
द्रौपदेया नरेन्द्रांश्च भूयिष्ठं समवारयन् ।
द्रोणपुत्रं च पाञ्चाल्यः शिखण्डी समवारयत् ॥ ६
भीमसेनस्तु राजानं गदापाणिरवारयत् ।
शल्यं तु सह सैन्येन कुन्तीपुत्रो युधिष्ठिरः ॥ ७
ततः समभवद्युद्धं संसक्तं तत्र तत्र ह ।
तावकानां परेषां च संग्रामेष्वनिवर्तिनाम् ॥ ८
तत्र पश्यामहे कर्म शल्यस्यातिमहद्रणे । C. 9 804 B. 9 16 8 K 9 15 9

## 15

☞ This adhy. is missing in D7 (cf. v. l. 9. 1. 1)

1 a) K4 D2 3 T1-3 G1. 3 M2-4 सेना, M1 सैन्यं (for सैन्यास्) T4 G2 तत्र सेनापरिमवे (G2 °तिर्भूयो) — b) K4 D 3 T1-3 G1 M2-4 पुरस्कृता, D2 °स्कृतं, T4 °स्कृतान् (for °स्कृता) K1 मद्रराजपुरस्कृता, G2 °राज पुरस्कृत, M1 राजन्य रणगे — c) Ś1 K1. 2 अभ्याद्रवन्, T4 G M2. 4 अभ्य(T2 °भ्य)द्रवत्, T1 अभ्यागतान्, G1. 3 M1 अभ्य(G1 भ्या)पतत्, M3 °द्रवन् (for द्रवन्) — d) T2. 4 G नदन्तो न(T3 नदन्ती मा स, G1. 3 यदनेकेन)द्वारणे

2 a) Ś1 K1. 3 B1 D1 पिडितान्, B1 - पति°, T2 पीडितान्, T4 पडितास् (for पीडि°) — b) D1 M1 प्रधावंत (for °वन्तो) D2 मदोत्कटा, M1 रणोत्कटान्, M3 °त्कटा (for °त्कटा) — c) D1 दक्षिणे (for क्षणेन) K. B1 Dn1 D1. 2 . 3 11 चैव (by transp.), B3 [प]त्र तु Ś1 K1. 3 D2 पार्या(K1 °र्थां)स्तान्, K3. 4 D2 तान्पार्थान्, D2 10 11 M2. 3 पार्थान्ते (for पार्थांस्ते) — d) K. सुबहून्, Dn1. n2 D2. 5 . 6 समवात् (for बहुत्वात्) D1 समवारयन्, T3 G1. 3 M °लोळयन्, T4 प्रत्ययोधयन् (for समलोड°)

3 a) D2 10 11 समरे (for कुरुभि) — b) K4 न च, M2-4 नैव (for नाव) K5 D2 8 पाण्डवाना च त (K. तत)स्थिरे — c) D1 S (except T1. 2) क्षणेनैव महाराज (D1 रणे राजन्) — d) K5 D2. 10 11 पश्यतो कृष्णपोण्डवा

4 B1 damaged for 4b-6d — c) D1 S अवारयत्, D2 °किरन् (for °किरत्) Ś1 K1. 3 D10 शरौघेन

5 B1 damaged — a) B1. 2. 3 Dn D2 5 6 8 9 T2 4 G1. 2 च (for तु) — b) D10 11 अवाकिरत् (for °रयत्) B1. 2 3 D2 3 ससैन्यं समवारयत् — G3 om. (hapl.) 5c-6d — c) K4 पार्थत (for पार्श्वत) T2 नकुलं पार्श्वं स्थित्वा (sic) — d) D5 महाराजम्, M1 माद्रराजम् D1 T G1. 2 M2-4 अयोधयत्, M1 अयुध्यत (for अवैक्षत)

6 G3 om. 6 (cf. v. l. 5) B1 damaged — a) Dn G1 द्रौपदेयान् (for °देया) Ś1 K1. 5 D5 8 T2 8 M3 नरेंद्राश्च, K4 °द्रैश्च, Dn1. n3 D3 °द्राणा, D2 °द्रान्वान्, D3 G1 °द्रश्च (for नरेन्द्रांश्च) — b) B5 D1 M1 भूयिष्ठान्, D2 ससैन्यं (for भूयिष्ठ) K5 D3 सम धारयन् — c) Dn1 n3 द्रौणे (for द्रोण) K4 पुत्रस् (for पुत्र) K4 D1 M2-4 तु (for च) Dn D5 पांचाला, D5 पाचाल (for पाञ्चाल्य) — d) D10 शिखंडी D1 स शिखंडी अवारयत्

7 D3 om. (hapl.) 7a-b T G1 8 transp. 7a-b and 7c-d — b) K1 गदापाणिम् Dn D5 6 स(D5 इ)- वाकिरत्, D1 अथाह्वयत् (for अवार) — c) B1. 8 शल्यम् (for शल्य) T1 सैन्य च (for सैन्येन)

8 a) K5 D3 10 11 सैन्यं (for युद्धं) — b) K5 B1 D3 स(D3 स)शक्तं, Dn D2 5 6 °कुलं(D2 °ळ), D8 G1 °युक्तं (for °सक्त) D1 वै युधि (for तत्र ह) — c) K4 तु, D1 om. (for च)

यदेवं सर्वसैन्यानि पाण्डवानामयुध्यत ॥ ९
व्यदृश्यत तदा शल्यो युधिष्ठिरमभीपतः ।
रणे चन्द्रमसोऽभ्याशे शनैश्चर इव ग्रहः ॥ १०
पीडयित्वा तु राजानं शरैराशीविषोपमैः ।
अभ्यधावत्पुनर्भीमं शरवर्षैरवाकिरत् ॥ ११
तस्य तल्लाघवं दृष्ट्वा तथैव च कृतास्त्रताम् ।
अपूजयन्ननीकानि परेषां तावकानि च ॥ १२
पीड्यमानास्तु शल्येन पाण्डवा भृशविक्षताः ।
प्राद्रवन्त रणं हित्वा क्रोशमाने युधिष्ठिरे ॥ १३
वध्यमानेष्वनीकेषु मद्रराजेन पाण्डवः ।
अमर्षवशमापन्नो धर्मराजो युधिष्ठिरः ।
ततः पौरुषमास्थाय मद्रराजमपीडयत् ॥ १४
जयो वास्तु वधो वेति कृतबुद्धिर्महारथः ।
समाहूयाब्रवीत्सर्वान्भ्रातॄन्कृष्णं च माधवम् ॥ १५
भीष्मो द्रोणश्च कर्णश्च ये चान्ये पृथिवीक्षितः ।
कौरवार्थे पराक्रान्ताः संग्रामे निधनं गताः ॥ १६
यथाभागं यथोत्साहं भवन्तः कृतपौरुषाः ।
भागोऽवशिष्ट एकोऽयं मम शल्यो महारथः ॥ १७
सोऽहमद्य युधा जेतुमाशंसे मद्रकेश्वरम् ।
तत्र यन्मानसं मह्यं तत्सर्वं निगदामि वः ॥ १८

---

9 B1 damaged B om $9^{ab}$ — $^{a}$) D10 11 पश्यामद् (for °नद्) T4 कार्म (for कर्म) — $^{b}$) D1 [अ]पि, G1 [अ]धि (for [अ]ति) D4 महात्मन, T1 4 G4 महारणे (for -महद्रणे) — D5 om $9^{c}$–$10^{b}$ — $^{c}$) D 9 -सैन्याना (for -सैन्यानि) — $^{d}$) Ś1 K1-3, 5 Dn D2 6 8 9 अयोधयत्, D3 अपोधयत् (for अयुध्यत)

10 D2 om $10^{ab}$ (cf v l 9) — $^{a}$) Dn T1 तथा (for तदा) — $^{c}$) S (except T2) कृतम् (for रणे) K1 4 5 B (except B1) Dn D1-8-10 T4 [ऽ]भ्यासे (for °भ्याशे) D11 रणे चंद्रम्य सोभ्याशे

11 $^{a}$) D1 धारयित्वा (for पीड°) B4 स (for तु) D1 S (except T1 2) स पी( T4 G मपी )डयित्वा राजान — $^{d}$) B 5 D2 M2 भयाकिरन्, D5 दृवाकिरद् (for अवा)

12 $^{a}$) Dn3 स (for तद्) — $^{b}$) Dn [अ]स्त्र, D1 6 [अ]स्त्रं (for च) Ś1 K1 2 महास्त्रतां, Dn1 n3 D1 एवार्पता (for °स्त्रताम्) — B1 damaged from $12^{c}$ up to $14^{c}$ — $^{c}$) D2 T2 अपूरयन (T2 °यद्) (for अपूज )

13 D2 om 13 B1 damaged — $^{a}$) D10 11 समरे (for शल्येन) — $^{b}$) G2 शर (for भृश) K5 D2 3 11 -पीडिता; Dn1 T4 G1 पीडिता; D1 5 विक्षिपा (for °क्षता) — $^{c}$) Dn D1 पाद्रवं तं (for प्राद्रवन्त) B1 Dn D1. 2 5 6 रणे (for रणं) — $^{d}$) Ś1 K1-3 क्रोशमाने. D1 °माना (for °माने) K2 युधिष्ठिरं

14 B1 damaged for $14^{ab}$ — $^{b}$) K4 राजेषु (for °राजेन) K1 D1 पाण्डवा; K1 पाण्डवं. — $^{d}$) D1 मद्रराज युधिष्ठिर (sic) — T3 om $14^{e}$–$15^{d}$ — $^{e}$) D10 पौरुष्यम् — $^{f}$) K2 अमोडयत्, D10 11 अताड° (for अपीड°)

15 T3 om 15 (cf v l 14) — $^{a}$) Dn1 corrupt. B1 5 वास्ति, Dn2 n3 D4 6 [ऽ]स्तु वा (by transp) K3 5 D1 4 10 11 वास्तु, D3 चास्तु (for वेति) — $^{b}$) D4 -युद्ध- (for बुद्धिर्) — $^{c}$) K5 corrupt Dn1 n3 D2 5 6 स महात्मा (for समाहूय) T4 श्रोतृन (for सर्वान्) — $^{d}$) T2 कृष्णेन (for कृष्ण च) K4 पाण्डव, D8 मानव, T4 पाण्डवान, G M पाण्डवा (G3 °व) (for माधवम्) D4 तथा कृष्ण तथार्जुन

16 $^{a}$) D2 T3 भीष्म (for भीष्मो) — $^{b}$) Ś1 पृथिवीभृत, K1 पृथिकौरवे (sic), K2 3 °वीतले, K4 D10 °वी( D10 °वि )क्षिता, D1 4 °वीश्वरा, G1 3 योधपुंगवा (for पृथिवीक्षित) — $^{c}$) T3 परिक्रांता

17 $^{a}$) K4 D3 यथाभागो, M2-4 °भार (for °भागं) — $^{b}$) Dn D2. 6 -निश्चया (for -पौरुषा) G2 भवद्भिः कृतपौरुषैः — K2 om. $17^{cd}$ — $^{c}$) D5 M1 विशिष्ट (for ऽवशिष्ट) D2 शल्योयं, T G एवायं (for एकोऽयं)

18 $^{a}$) D1 रणे (for युधा) Dn यैनम् (sic), D2 ऐनम् (for जेतुम्) — $^{b}$) K5 D1 3 10 11 मद्रकाधिप (D3 °प) — $^{c}$) K2 corrupt Ś1 K1 M3 यत्र, K4 5 B1 3-5 Dn D1-3 6 8 9 T2 अत्र, T1 अद्य (for तत्र) T1 2 सर्वं (for मह्यं) T2 4 तर्कयामास संदेहस् (T4 मह्यं तत्), G1 तर्कयन्मानसं मह्यं. — $^{d}$) D2 तत्परं, D4 तत्र तु, T1 2. 4 G M3 4 तद्वित; T3 तत्पदं; M1 2 सकल्पं (for तत्सर्वं) Ś1 K1 2 निरगामि (for निगदामि) Dn1 तत्परं विधीयतां; Dn2 n3 D2 6 तत्पर संविधीयतां.

चक्ररक्षाविमौ शूरौ मम माद्रवतीसुतौ ।
अजेयौ वासवेनापि समरे वीरसंमतौ ॥ १९
साध्विमौ मातुलं युद्धे क्षत्रधर्मपुरस्कृतौ ।
मदर्थं प्रतियुध्येतां मानार्हौ सत्यसंगरौ ॥ २०
मां वा शल्यो रणे हन्ता तं वाहं भद्रमस्तु वः ।
इति सत्यामिमां वाणीं लोकवीरा निबोधत ॥ २१
योत्स्येऽहं मातुलेनाद्य क्षत्रधर्मेण पार्थिवाः ।
स्वयं समभिसंधाय विजयायेतराय वा ॥ २२
तस्य मेऽभ्यधिकं शस्त्रं सर्वोपकरणानि च ।
संयुञ्जन्तु रणे क्षिप्रं शास्त्रवद्रथयोजकाः ॥ २३
शैनेयो दक्षिणं चक्रं धृष्टद्युम्नस्तथोत्तरम् ।
पृष्ठगोपो भवत्वद्य मम पार्थो धनंजयः ॥ २४
पुरःसरो ममाद्यास्तु भीमः शस्त्रभृतां वरः ।
एवमभ्यधिकः शल्याद्भविष्यामि महामृधे ॥ २५
एवमुक्तास्तथा चक्रुः सर्वे राज्ञः प्रियैषिणः ।
ततः प्रहर्षः सैन्यानां पुनरासीत्तदा नृप ॥ २६ C. 9 822 B 9 16 27 K 9 15 27

---

19 $^a$) K. B2 4. D1. 3 11 S (except T1 2) वीरौ (for शूरौ) —$^b$) M3 मद्रवती (for माद्र°) —D10 repeats 19$^{cd}$ after 20$^b$ —$^c$) K1. D1 3 अयोध्यौ, Dn D2 5 6 दुर्जयौ, D4 T1 G1 अजयौ (T1 °य्यौ), D10 (first time) अयज्यौ (sic) (for अजेयौ) Ś1 K1. 2 वासवस्य, D10 (second time) माधवेन (for वास°) —$^d$) B4 D1 9 10 (both times) 11 शूर (for वीर) K4 D2 सगमे (for °मतौ) Ś1 K1 2 समरे कोविदौ मतौ, Dn D2 6 °रे चित्रयोधिनौ

20 $^a$) Ś1 K1 2 मा ग्विम, Dn D2 5 6 योत्स्येते (D6 °तौ), T1 M साधिम, G1 स्वध्रियौ (sic), G3 स्वध्रिय (sic) (for साध्विमौ) D2 मातुळ —$^b$) D3 10 यत्र, D4 वीरौ (for क्षत्र) Dn D2. 6 क्षत्रधर्मे त्व(D2 °मेव्य)वस्थितौ —After 20$^b$, D10 repeats 19$^{cd}$ —$^c$) K4 5 D1 10 11 T1. 2 मदर्थे, G1. 2 तदर्थं (for मदर्थं) Ś1 K1. 2 प्रत्ययुध्येता (for प्रति°) —$^d$) Ś1 K1 2 मानार्यौ, T3 मनस्वान, G1 M1 मानार्हं, G2 अनर्हौ, M3 महार्हौ (for मानार्हौ) Ś1 K1 2 विक्रमौ, K6 मयुरौ, M1 मगर (for °गरौ) —After 20, K4 Dn D2 5 6 ins

84* किं वा प्रलपितेनाथ व्यर्थेनानेन किंचन ।

[ Dn1. n2 [अ]पि (for [अ]थ) ]

21 $^a$) D10 मा (for मां) Dn D1. 2 5 6 हन्यात् (for हन्ता) —$^c$) D1 तु मे (for इमा) T3 4 G1. 2 वाच (for वाणीं) —$^d$) K4 D1 T3 G2 M1 लोके (for लोक°) G2 -वीरां (for -वीरा) G2 निबोधता (for °धत)

22 $^a$) Dn D2. मद्रराजेन, D4 मातुल ह्यद्य (for °लेनाद्य) —$^b$) K4 तत्र, K5 B2 4 D11 क्षात्र (for क्षत्र) D1 क्षत्रधर्मे व्यवस्थित —K3 om 22$^c$–25$^b$, D1 om 22$^{cd}$ —$^c$) K5 corrupt. Ś1 K1 3 मन स्व माभि-, K4 S (except T3) स्वमंश°, D3 स्वमस्त्र°, D4 स्वपक्ष°, D. वयं स° (for स्वयं स°) —$^d$) K4 5 D2 4 11 च (for वा)

23 K3 om 23 (cf v l. 22) —$^a$) T3 ततो (for तस्य) D10 11 मेप्यधिक, T1. 2 G1 ह्यस्य°; T3 [अ]स्याप्य°, T4 विभ्यधिक (sic), G3 सद्य° (sic), M1 मेत्य° (for मेऽभ्य°) D4 सत्त्व (for शस्त्रं) —$^b$) D8 वा, G3 तु (for च) D3 सर्वोपस्करणानि च, M1 °करणान्वित —$^c$) K3 D10 संजुग (D10 °त) तु, K4 B2 D3 सयुज्यतु, K5 सपूज्यतु, Dn D6 सयु(D5 °यु)जत, D1 सयुजतु, D2 सुयुजतु, D4 सयुज्यतु, D8 °युत तु, D11 सजतु, T1 G1. 3 M2–4 सयुज्यता, T2 3 G2 युज्यता, T4 क्षिप्यता (for °युञ्जन्तु) D4 5 T G1. 3 M2–4 रथे (for रणे) M1 योजयतु रथ शीघ्र —$^d$) D6 -योजना, T1 3 4 G M2–4 -योजकै, M1 -कोविदा (for -योजका) D4 प्रशास्ते भद्रमोजसा

24 K3 om 24 (cf v l. 22) M3 om 24$^a$–25$^b$ —$^a$) K4 5 B5 D2 4 से(D4 सै)नेयो, G3 शैनेय M1 दक्षिणे T1 2 पक्षं, G3 भाग, M1 चक्रे (for चक्रं) —$^b$) M3 धृष्टद्युम्नं D1 तयोत्तम, T3 4 G3 M (M2 om) तथेतर (M1 °रे, M4 °रत्) (for तथोत्तरम्) —$^c$) T4 पृष्ठतो वै (for °गोपो) M1 पृष्ठतो नकुलस्तत्र —$^d$) M1 वामपार्श्वे (for मम पार्थो)

25 K3 om 25$^{ab}$ (cf v l. 22) M3 om 25$^{ab}$ (cf. v l. 24) —$^a$) Ś1 K1 ममाप्यस्तु, B5 Dn1 D4 8 °द्यस्तु, M1 महाबाहुर् (for ममाद्यास्तु) —$^b$) Dn D5 (after corr as in text) 6 भीमसेनो वृकोदर —$^{cd}$) T3 पार्थाद् (for शल्याद्) D1 महाहवे (for °मृधे) Dn D2 5 एवमामधित शल्य वधिष्यामि महामृधे (Dn1 °हवे)

26 $^a$) T3 4 G3 ततश् (for तथा) D2 सर्वे (for चक्रु) —$^b$) K3 corrupt K5 B2 D1. 4 5 10 11 T1 तदा; D3 T2 तथा, T3. 4 G M ततो (for सर्वे) G2

पाञ्चालानां सोमकानां मत्स्यानां च विशेषतः ।
प्रतिज्ञां तां च संग्रामे धर्मराजस्य पूरयन् ॥ २७
ततः शङ्खांश्च भेरीश्च शतशश्चैव पुष्करान् ।
अवादयन्त पाञ्चालाः सिंहनादांश्च नेदिरे ॥ २८
तेऽभ्यधावन्त संरब्धा मद्रराजं तरस्विनः ।
महता हर्षजेनाथ नादेन कुरुपुंगवाः ॥ २९
ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।
तूर्यशब्देन महता नादयन्तश्च मेदिनीम् ॥ ३०
तान्प्रत्यगृह्णात्पुत्रस्ते मद्रराजश्च वीर्यवान् ।
महामेघानिव बहूञ्शैलावस्तोदयावुभौ ॥ ३१
शल्यस्तु समरश्लाघी धर्मराजमरिंदमम् ।
ववर्ष शरवर्षेण वर्षेण मघवानिव ॥ ३२
तथैव कुरुराजोऽपि प्रगृह्य रुचिरं धनुः ।
द्रोणोपदेशान्विविधान्दर्शयानो महामनाः ॥ ३३
ववर्ष शरवर्षाणि चित्रं लघु च सुष्ठु च ।
न चास्य विवरं कश्चिद्ददर्श चरतो रणे ॥ ३४

---

गत (for राज) D2 राम प्रियहितैषिण —K4 om 26c–27b —c) D1 दर्पम्तु, M2 प्रहर्ष (for °र्ष) M1 गत प्रहर्षपरन्तप —d) M1 आयात् (for आसीत्) B1 D3 6 मद्रा (for गदा) K5 B D3 8–11 मृधे, D2 युधि (for नृप)

27 K4 om 27ab (cf v 1 26) —a) K1 B पैषागत्य D3 6 पाञ्चाल्सोमकाना च —b) G1 2 मात्स्याना D4 परंतप, S (except T1 2) महात्मना (for विशेषत) —c) Dn1 D4 T3–4 G M2 3 प्रतिज्ञात (for °ज्ञा ता) —d) B Dn D 6 8 9 T4 G पूजयन (for पूर°) D1 2 M1 धर्मराजोऽभ्य (D1 °सूनोर)पूजयन्, D4 °राजेन पूरित, M2–4 °राजोऽभ्यपूरयत —For 27cd, K4 5 D3 10 11 subst

85* प्रतिज्ञा ता गदा राजा कृत्वा मद्रेशमभ्ययात् ।
[ K5 D3 गदा (for राजा) ]

—After 27, Ś1 K1, 2 leave a blank space of about half a stanza

28 a) K4 5 Dn D1 2 6 8 9 T2 G1 शंखाश्च Dn D2 3 6 T2 भेर्यश्च; D3 T1 M1 भेरी°; G3 भेर्या° (for भेरी°) —b) K2 3 5 B D3–8 9–11 T–1 पुष्करान्(T2 °रा:, K1 M3 पुष्कराः; Cn (gloss वादित्राणि) पुष्करान (as in text) —c) B1 प्रावादयन्त, D3 आवादयन्त; T2 व्यवादयंश्च, T3 अनादयन्त (for अवाद°). K2 4 B 2 D5 पंचाला —d) K5 D3 M3 नादाश्च (for नादा) T3 नादिरे; M1 चक्रिरे (for नेदिरे)

29 a) D1 अभ्यधावंस्त; T1.2 तेऽभ्यधावश्च (for °धावन्त) B1 D4 समरे, T1 4 G1 2 M सक्रुद्धा (for °रब्धा) G3 तेऽभ्यधावन्सुसंक्रुद्ध —b) K3 5 D4 6 10 11 T1 2 4 G 1 M1 नदं D2 यशस्विने (for °स्विन ) —D1 om 29cd —c) D1 हर्षरेण, D3 G1 2 नादेन (for °जे-नाथ) —d) M2–4 मद्र (for कुरु). T1 2 नंदन;

T3 G2 पुंगव (for °गवा) K5 D3 गर्जय(D8 विदार्य)-तो नभस्तल

30 a) D3 हृदेन, T2 नादेन (for ह्रादेन) Dn D5 वृंदाना (for -घण्टाना) —b) D10 शंखाना (for शङ्खाना) D8 M2 निस्वनेन, M3 °नदेन (for °नदेन). —c) D4 पूर्व (for तूर्य) —d) T3 4 G नादयानाश्च

31 a) D3 corrupt. Dn1 पुत्रास् T3 4 G तान्प्रत्य गृह्णन्पुत्रास्ते —b) K4 तु, Dn2 n3 स्व- (for च) —D1 om 31cd —c) Dn D2 5 6 गर्जन (for महा) D3 शैलौ, D1 बहून् (for बहूञ्). —d) D10 इव (for उभौ) Ś1 K1 शैलावस्थोदयावुभौ; D3 पर्वतोस्तोयदा°, D1 शैलपानी तथा उभौ, T1 3 4 G शैलौ द्वौ तो(T2 °लैं द्वस्तो, T4 °ला वै तो, G1 °लौभौ तो, G2 °लाभास्तो-; G3 °लोभौ तो)मदागमे, T2 शैलाद्वावो यथागमे, M शैलावि(M2 °ला इ-, M3 °लानि)व घनागमे

32 a) Ś1 K1–3 शैल्यस् (for शल्यस्) Dn D2 5 6 तं (for तु) B1 D5 9 समरे, T4 समर्द (for समर-) D- पार्थ, T4 क्रुद्ध (for -श्लाघी) —b) Ś1 K1–3 मद्र- (for धर्म) K4 5 D2 5 8 M3 अरिंदम, Dn D5 °दम (for °दमम्) —K3 om (hapl) 32c–33d, B1 reads the same on marg —d) K4 मघवा (sic); K5 lacuna, Dn D2 6 पर्जन्य, D4 वर्षासु, D11 वर्षर (for वर्षेण). Bom ed मघवा (for मघवान्) S (except M1) मघवानिव पर्वतं

33 K3 om 33 (cf v 1 32) B1 reads 33 on marg —b) D3 यथा (for धनु) —d) K2 corrupt. M1 महारथ (for °मना). —After 33, G2 ins

86* मद्रपे विविधान्बाणान्दर्शयन्हस्तलाघवम् ।

34 a) B1 D1 8 -वर्षेण; D4 -जालानि (for -वर्षाणि) —b) Ś1 K1. 2 चिरं (for चित्रं) —D1 om 34c–35d.

तावुभौ विविधैर्बाणैस्ततक्षाते परस्परम् ।
शार्दूलावामिषप्रेप्सू पराक्रान्ताविवाहवे ॥ ३५
भीमस्तु तव पुत्रेण रणशौण्डेन संगतः ।
पाञ्चाल्यः सात्यकिश्चैव माद्रीपुत्रौ च पाण्डवौ ।
शकुनिप्रमुखान्वीरान्प्रत्यगृह्णन्समन्ततः ॥ ३६
तदासीत्तुमुलं युद्धं पुनरेव जयैषिणाम् ।
तावकानां परेषां च राजन्दुर्मन्त्रिते तव ॥ ३७
दुर्योधनस्तु भीमस्य शरेणानतपर्वणा ।
चिच्छेदादिश्य संग्रामे ध्वजं हेमविभूषितम् ॥ ३८
सकिङ्किणीकजालेन महता चारुदर्शनः ।
पपात रुचिरः सिंहो भीमसेनस्य नानदन् ॥ ३९
पुनश्चास्य धनुश्चित्रं गजराजकरोपमम् ।
क्षुरेण शितधारेण प्रचकर्त नराधिपः ॥ ४०
स च्छिन्नधन्वा तेजस्वी रथशक्त्या सुतं तव ।
बिभेदोरसि विक्रम्य स रथोपस्थ आविशत् ॥ ४१
तस्मिन्मोहमनुप्राप्ते पुनरेव वृकोदरः ।
यन्तुरेव शिरः कायात्क्षुरप्रेणाहरत्तदा ॥ ४२
हतसूता हयास्तस्य रथमादाय भारत । C. 9 829 B 9 16 44 K 9 15 44

— c) Dn D2 c [ए]व (for च) D2 कश्चिद् (for कश्चिद्) — d) M1 दिशो वि (for ददर्श) K4. 5 Dn1 D3 4 G3 च ततो, M.–4 पुरतो (for चरतो) T2. 4 G1. 3 युधि (for रणे)

35 D1 om 35 (cf v l. 34) — a) B2 D1 निशि-तैर्, T3 4 G M2–4 विधिवद् (for विविधैर्) — b) D3 ततक्षाते च (for ततक्षाते) D10 परस्परं — c) K5 शार्दूलाद् (for °लाव्) D3 शार्दूलाविव संप्रेप्सू, D4 °वामिषप्रेप्सू

36 ab) T1. 2 transp तव पुत्रेण and रणशौण्डेन T3 4 द्रोण (for तव) D4 10 11 युद्ध (for रण) D4 संयुत, G3 °वृत (for °गत) — c) Dn1 n2 D2 5 6 10 11 T2 4 G M2 पाञ्चाला (D2 °ला), M3 4 पाञ्चाल° — d) T1 2 तथा माद्रीसुतावुभौ —Ś1 K1. 2 om. 36e–38f — e) K3 °प्रमुखान (for °ग्वान्) — f) K. B1 Dn1 D3 प्रत्यगृह्णात्, Dn3 °गृह्णीत (for °गृह्णन्)

37 Ś1 K1 2 om 37 (cf v l 36), D1 om 37 — a) Dn1 n3 D4 . तुमल — b) D6 जयैषिणौ (sic) — d) K. D3 दुश्चरिते तव, B5 दुर्मंत्रितेन च (for °ते तव)

38 Ś1 K1 2 om 38 (cf v l 36) — a) K3 दुर्योधनस्य G3 भीमिन्तु — b) B5 [ऽ]नत, Dn D2 4 6 10 S (except T4) नत (for [आ]नत) B1 शराणा नतपर्वणा — c) D1 2 [आ]दिश्य, T1 2 4 [ऽ]दिश्य (for [आ]दिश्य) D1 -सकाशं (for संग्रामे) — d) D10 गज (for ध्वज) K5 D1 8. 10 11 -परिष्कृ(D1. 10 °स्कृ)तं (for विभूषितम्)

39 a) K5 D10 किं(D10 -कं)किनीक, D3 किंचिनिक (sic), G2 -किंकणीक (for किङ्कि°). D2 -जालेन K4 किंकिणीकृतजालेन — b) Dn D3 महान्वै, D5 शरेण; D3 महतश्च (for महता) Ś1 K1. 2 -दर्शिना (K2 °न) (for -दर्शन) — c) Ś1 K1. 2 चचार (for पपात) K3 D4 रुचिरं, B3 4 रुधिर, D11 द्विरद (for रुचिर) K3 5 B Dn D2 5 6 8–11 सख्ये (for सिंहो) — d) K3 B1 D3 मारिष, K4 5 B2–5 Dn D2 3 5 6 8 मानद (B2 D2 द), D1 नादवत्, D4 वै तदा, D10 11 पश्यत, T1 3 G2 3 M2–4 नादयन् (G3 यत्), T2 G1 M1 नानदत् (for °दन्)

40 D5 om. 40a — a) B (except B2) D9 पुनश्चापि, Dn D2 . 6 भीमस्या(D5 °श्चा)पि, D1 पुनस्तस्य (for °श्चास्य) B1 छिन्नं (for चित्र) — b) K4 5 D1 नाग, D2 दृढं (for गज) D2 गज- (for राज) — c) D1 शरेण, D4 बाणेन (for क्षुरेण) D10 om (hapl.) शितधारेण Ś1 K1 Dn D1 5 6 G3 शात-, D4 सीत-, M3 शीत (for शित) — d) K5 D3 स, T4 वि- (for प्र-) Ś1 K1. 5 Dn1 D1 3 नराधिप, T3 °धिप (for °धिपः)

41 a) T2. 4 G2 3 M संछिन्न (for स च्छिन्न-) — b) G3 प्लुतं (sic) (for सुतं) — c) Ś1 K1–3 संगम्य (for विक्रम्य) — d) D3 4 रथोपस्थम् (for °पस्थ) D3 उपाविशत् (hypermetric) K5 Dn D2 5 M1 रथोपस्थ उपा(Dn D2 . °स्थं स आ-, M1 °स्थमथा)विशत्

42 S (except T1. 2) om. 42ab — b) D5 वृकोदरात् D4 भीमो गृह्य धनु पुन — c) K6 D3 T4 M1 तस्य, B D4 8 9 T1 3 G1 M2–4 अस्य (for एव) — d) K3 B5 [अ]हनत्तदा, T3. 4 G1 3 न्यकृंतत (for [अ]हरत्तदा) K2 क्षुरेणाहनत्तदा (submetric), D4 M1. 3 क्षुरेणापहरत्तदा

43 a) K4 5 D3 हतसू(K5 °स्त)तो; Dn D4 T4 G3 °सूत; D3 रथसूता; G2 हते सूते (for हतसूता) — b)

C 9 839 B 9 16 44 K 9 15 44

व्यद्रवन्त दिशो राजन्हाहाकारस्तदाभवत् ॥ ४३
तमभ्यधावत्त्राणार्थं द्रोणपुत्रो महारथः ।
कृपश्च कृतवर्मा च पुत्रं तेऽभिपरीप्सवः ॥ ४४
तस्मिन्विलुलिते सैन्ये त्रस्तास्तस्य पदानुगाः ।
गाण्डीवधन्वा विस्फार्य धनुस्तानहनच्छरैः ॥ ४५
युधिष्ठिरस्तु मद्रेशमभ्यधावदमर्षितः ।
स्वयं संचोदयन्नश्वान्दन्तवर्णान्मनोजवान् ॥ ४६
तत्राद्भुतमपश्याम कुन्तीपुत्रे युधिष्ठिरे ।
पुरा भूत्वा मृदुर्दान्तो यत्तदा दारुणोऽभवत् ॥ ४७
विवृताक्षश्च कौन्तेयो वेपमानश्च मन्युना ।
चिच्छेद योधान्निशितैः शरैः शतसहस्रशः ॥ ४८
यां यां प्रत्युद्ययौ सेनां तां तां ज्येष्ठः स पाण्डवः ।
शरैरपातयद्राजन्गिरीन्वज्रैरिवोत्तमैः ॥ ४९
साश्वसूतध्वजरथान्रथिनः पातयन्बहून् ।
आक्रीडदेको बलवान्पवनस्तोयदानिव ॥ ५०
साश्वारोहांश्च तुरगान्पत्तींश्चैव सहस्रशः ।

---

D10 11 आस्थाय (for °दाय) — D9 om 43^c–44^b — ^c) K4 शिरो (sic), B Dn D2 5 6 8 रणे, T3 G3 ततो (for दिशो) T1 2 राज्ञो (for राजन्) K5 व्यद्रवन्सदिशो राजन् — ^d) B Dn1. n2 D2 5 6 8 T1–3 G M1 ततो (for तदा) T4 हाहाकारो महानभूत्

44 D9 om 44^ab (cf. v l 43) — ^a) T1 2 अभ्यधावस्, T3 °याच्च (for °धावत्) — ^d) K4 तेस्य, B (except B2) Dn D4 5 6 8 9 तव, T2 4 G1. 3 ते हि (for तेऽभि) D2 तत्र पुत्रं परीप्सत्र

45 ^a) K5 निद्रुपिते (sic), Dn D2 5 6 विनिहते, D3 °लुपिते, D4 °चलिते, T3 °मुशिते; M °लुळिते (for °लुलिते) — ^b) K1 न्यस्तास्, B2 व्यस्तास्, Dn2 n3 [ऽ]त्रसंस्, D1 संत्रस्तास् (hypermetric), T2 त्रासात् (for त्रस्तास्) D3 तत्र (for तस्य) Dn1 तत्रस्यस्त पदानुगा, D2 सत्रस्तास्य पदा°, T3 G M1. 2 4 त्र(G1 संत्र [hypermetric])स्तास्तस्य पदानुगान् — ^c) Ś1 K1 गाडीवं, Dn2 n3 D1 5 गाजीव- Ś1 K1 lacuna for धन्वा विस्फार्य K5 D3 विस्फूर्य, T2 3 G3 M °ष्फार्य (for °स्फार्य) — ^d) T3. 4 G1 3 तद् (for तान्) D2 न्यहनत्; S (except T1 2) व्य(G1. 3 वि)धमत् (for अहनत्)

46 ^b) Dn D2 5 6 अरिंदम (Dn3 D5 °म) (for अमर्षित) T3 अभ्ययाद्दवमर्षित — *D1 om. 46^cd* — ^c) Ś1 K1–3 प्र- (for स) Dn D10 11 नोदयन्, T3 4 G2 3 M2–4 Cv -चोदयानो (for -चोदयन्) K4 स्वयं सचोदयंवस्तान्, D2 संनोदयत तानश्वान् — ^d) K5 हेम वर्णान्, Dn D6 हंस°, T3 दंतवत्तान् (for °वर्णान्) B1 महा- (for मनो-).

47 ^a) D4 T3 G2 M तद् (for तत्र). K3 D2. 4 [अ]न्द्रुतम्; K5 D1. 3 10. 11 [आ]श्चर्यम् (for [अ]द्भुतम्). K4 Dn T3 अपश्याम. — ^b) K3 4 D2 3 S (except M1) कुंतीपुत्रो युधिष्टिर — ^c) D2 3 पुरो (for पुरा) Dn D2 पुनर् (for मृदुर्) Ś1 K1 2 क्षातो (for दान्तो). — ^d) K4 यत्र वै, T1 यस्तदा, T3 4 G2 यत्नवान् (for यत्तदा)

48 ^a) D3 4 S (except T2 M1) वि(M3 नि)वृत्ताक्ष, D10 विकृता° (for विवृता°) K4 5 B3 Dn D2 3 5 6 11 T2 तु, T3 4 G M हि (for च) — ^b) T4 मन्युमान् (for मन्युना) T2 दीप्यमानस्तु मन्युना — ^c) T3. 4 G विशिखै (for निशितै) M1 विभेद निशितैर्योधान्, M2–4 विभेद योधान्निशि(M3 °धाश्च शि)तै — ^d) B (except B2) D3. 9 भल्लै, Dn1. n3 D2 5 6 बाणै; G1. 2 M2–4 शितै, G3 शतै (for शरै) T4 शतशोथ सहस्रश — *After 48, Dn D5 6 read 51^c–52^b*

49 Ś1 K1. 2 lacuna for 49^a–51^b, Dn D1. 5 6 om 49 — ^a) K3 B1. 3 5 D2 3 9 प्रत्युदियात्, K5 प्रत्युदियायौ (hypermetric), D4 G2 M2–4 अभ्यहनत्, T3. 4 G1. 3 M1 अभ्यगमत् (T4 °मन्) (for प्रत्युद्ययौ). — ^b) K5 B1. 5 D3 श्रेष्ट, D9 छेद्य (sic) (for ज्येष्ठ.) T1. 2 तु (for स) D2 सा सा चायो व्यनश्यत, D4 S (except T1. 2) सा सा (G2. 3 ता ता) सद्यो व्यनीनशत् (D4 विनस्यति) — ^c) K3 D2 राजा (for राजन्) D9 स शरै पातयद्राजन्, D4 S (except T1 2) न्यपात(M3 °वार)यत कौंतेयो — ^d) K5 गिरिद् (for गिरीन्) T3. 4 G गिरीन्व(T4 °रिवं)त्र इवोत्तमान्, M2 4 गिरिन्वात्तैरिवोत्तमै — After 49, D2 reads 51^c–52^b

50 Ś1 K1 2 lacuna for 50 T4 om. 50^ab — ^a) T2 -वरान् (for -रथान्) — ^b) T3 स तथा, G M यो (M2 यौ)धाश्च (for रथिन) D4 प्रसयन्; T1. 2 [ऽ]पातयद् (T1 °यन्); T3 मारहद्; G1. 3 माथ(G3 °थ)मद्; G2 प्रवरान्; M महितान् (for पातयन्). — ^c) K3 सो क्रीडदेको; K5 Dn2 D1. 2 10 T2–4 G1 M1 अक्री°, G2 आक्रीडतैको (for °देको). — ^d) K4 D1 4 S तोयदैर्

C 6, 1574
B. 9 29 8
K 9 28 8

पाञ्चाल्यं चापि सबलं हत्वा शीघ्रं निवर्तत ॥ ८
तस्य ते शिरसा गृह्य वचनं युद्धदुर्मदाः ।
प्रत्युद्ययू रणे पार्थास्तव पुत्रस्य शासनात् ॥ ९
तानभ्यापततः शीघ्रं हतशेषान्महारणे ।
शरैराशीविषाकारैः पाण्डवाः समवाकिरन् ॥ १०
तत्सैन्यं भरतश्रेष्ठ मुहूर्तेन महात्मभिः ।
अवध्यत रणं प्राप्य त्रातारं नाभ्यविन्दत ।
प्रतिष्ठमानं तु भयान्नावतिष्ठत दंशितम् ॥ ११
अश्वैर्विपरिधावद्भिः सैन्येन रजसा वृते ।
न प्राज्ञायन्त समरे दिशश्च प्रदिशस्तथा ॥ १२
ततस्तु पाण्डवानीकान्निःसृत्य बहवो जनाः ।
अभ्यघ्नंस्तावकान्युद्धे मुहूर्तादिव भारत ।
ततो निःशेषमभवत्तत्सैन्यं तव भारत ॥ १३
अक्षौहिण्यः समेतास्तु तव पुत्रस्य भारत ।
एकादश हता युद्धे ताः प्रभो पाण्डुसृञ्जयैः ॥ १४
तेषु राजसहस्रेषु तावकेषु महात्मसु ।
एको दुर्योधनो राजन्नदृश्यत भृशं क्षतः ॥ १५
ततो वीक्ष्य दिशः सर्वा दृष्ट्वा शून्यां च मेदिनीम् ।

---

8 $^{a}$) D1 जित्वा, D4 पार्थान् (for सर्वान्) —$^{b}$) D4 पाडवानां (for °वान्स) Dn D2 5 T8 जनान् (for गणान्) —$^{c}$) B2 सानुग चैव, D1 G1 3 चापि सुवल, D2 चापि सवळ, D4 6 M1 चापि सगण, G2 सवलं चापि (by transp) T8 पाचालान्सवलाश्चापि —$^{d}$) D2 5 7 चापि (for शीघ्रं) K5 B2 D3 5 6 10 11 T1 2 4 G1 M8 न्यवर्तत, G2 निवर्तथ

9 $^{a}$) D4 ते तस्य (by transp), G1 3 तस्यैते M1 2 4 वचन (for शिरसा) T8 तेष, G2 [आ]दाय (for गृह्य) —$^{b}$) T G M8 शासन, M1 2 4 शिरसा (for वचन) —$^{c}$) K4 5 प्रत्युधयौ, Dn3 D4 °द्याय; D3. 10 11 अभ्युधयू (for प्रत्यु°) Ś1 K1-3 राजंस, D6 T3 पार्थ (for पार्थास्) D1 प्रययु पाडवान्सर्वे

10 $^{a}$) T3 4 G एवापतत, M अ(M8 आ)वाप्य तत (for अभ्यापतत) —$^{b}$) M1 हतशेपा —$^{c}$) K2 आपी, D2 आसी (for आशी) —$^{d}$) M1 पाडवान (for °वा) Ś1 K D1 10 T1 2 समवारयन् (for °किरन्) D4 पांडवा शीघ्रमर्दयन्, D6 °वैरर्दिता भृश

11 $^{a}$) D8 भारत, T2 समर (for भरत-) K5 -श्रेष्ठ (for श्रेष्ठ) — The portion of the text from $11^{c}$ up to $67^{b}$ is lost in B2 on missing folios —$^{c}$) K2 T2 3 अविध्यत; D3 अवध्यत K3 D4 रणे (for रण). —$^{d}$) Ś1 K Dn D1 M3 [अ]प्यविंदत; D4 च वि°; D5 7 [अ]भ्य(D6 °भि)पद्यत (for °विन्दत). — D1 om $11^{e}$–$12^{d}$ —$^{e}$) T G M2-4 पलायमानं (for प्रतिष्ठ°) D4 ते हन्यमानासुभयान्, M1 पलायने मतिं कृत्वा —$^{f}$) K3 4 5 B (B2 missing) D3-6 8-11 T G नावतिष्ठ(D5 6 °ष्ठ)ति, Dn D2 न चा(D2 वा)तिष्ठत, (for नाव) K3 4 D4 दंशिता (K3 °त), T4 G2 3 दसित; M संयुगे (for दंशितम्)

12 B2 missing D1 om 12 (for both, cf v 1 11) —$^{b}$) T3 corrupt —$^{c}$) K4 5 Dn D2 3 5 10 S (except T1) प्रजायत —$^{d}$) Ś1 K1-3 च वि D10 *प्र, D11 सप्र, T3 प्रति (for च प्र) Dn प्रदिशो विदिशस्तथा

13 B2 missing (cf v 1 11) —$^{a}$) B4 5 पाडवा नीक (for °नीकान्) —$^{b}$) K2 corrupt D1 T2 3 निसृत्य, M3 निहत्य (for निःसृत्य) D2 विसृत्य बळ वाहन —$^{c}$) B4 5 अभ्ययुस् (for अभ्यघ्नस्) T3. 4 G तावकं (for °कान्) T3 सर्वं, T4 G सैन्य, M1 2 4 सर्वे, M3 सर्वानि (for युद्धे) D1 अमारयंस्तव भटान् —$^{d}$) D5 मुहूर्तम् (for °र्ताद्) — Ś1 K1-3 om $13^{e}$–$14^{d}$ K4 om (hapl) $13^{e}$–$14^{b}$ —$^{f}$) D1 तन (for तव) D4 S तव सैन्य विशा पते (D4 नरेश्वर), D5-7 सैन्यं तव (D6 तव सैन्य) च भारत

14 B2 missing (cf v 1 11) Ś1 K1-3 om 14, K4 om $14^{ab}$ (for both, cf v 1 13) D6 om (hapl.) $14^{ab}$ —$^{a}$) S (except T3 M3) अक्षोहिण्य D3 5. 7 च (for तु) —$^{d}$) M सर्वास्ता (for ताः प्रभो) Dn प्रभो पाडवसृजयै, D3 मुहूर्तादिव भारत

15 B2 missing (cf v 1 11). —$^{a}$) T2 तासु (for तेषु) G1 3 राजन् (for राज) —$^{c}$) D3 9 T2 G2 राजा (for राजन्) —$^{d}$) M भृश (for भृशं) K4 5 B (B2 missing) Dn D3 5 7-9 अदृ(D9 न दृ)श्यद्भृशवि (K4 5 °दृक्षतवि, D1 °द्भुवि वि)क्ष(Dn2 D2 7. °क्षि)त, D3 4 दृश्यते (D3 अदृश्यत [hypermetric]) भृश-विक्षित

16 B2 missing (cf v 1 11) —$^{a}$) Ś1 K2 वक्ष्ये (sic), M वीक्षन् (for वीक्ष्य) K4 सर्वान् (for सर्वा),

विहीनः सर्वयोधैश्च पाण्डवान्वीक्ष्य संयुगे ॥ १६
मुदितान्सर्वसिद्धार्थान्नर्दमानान्समन्ततः ।
बाणशब्दरवांश्चैव श्रुत्वा तेषां महात्मनाम् ॥ १७
दुर्योधनो महाराज कश्मलेनाभिसंवृतः ।
अपयाने मनश्चक्रे विहीनबलवाहनः ॥ १८

धृतराष्ट्र उवाच ।

निहते मामके सैन्ये निःशेषे शिविरे कृते ।
पाण्डवानां बलं सूत किं नु शेषमभूत्तदा ।
एतन्मे पृच्छतो ब्रूहि कुशलो ह्यसि संजय ॥ १९
यच्च दुर्योधनो मन्दः कृतवांस्तनयो मम ।
बलक्षयं तथा दृष्ट्वा स एकः पृथिवीपतिः ॥ २०

संजय उवाच ।

रथानां द्वे सहस्रे तु सप्त नागशतानि च ।
पञ्च चाश्वसहस्राणि पत्तीनां च शतं शताः ॥ २१
एतच्छेषमभूद्राजन्पाण्डवानां महद्बलम् ।
परिगृह्य हि यद्युद्धे धृष्टद्युम्नो व्यवस्थितः ॥ २२
एकाकी भरतश्रेष्ठ ततो दुर्योधनो नृपः ।
नापश्यत्समरे कंचित्सहायं रथिनां वरः ॥ २३
नर्दमानान्परांश्चैव स्वबलस्य च संक्षयम् ।
हतं स्वहयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात् ॥ २४ — 9 1593 F. 9 29 26 K. 7 29 6

— $^b$) Ś1 K1-2 शून्या दृष्ट्वा (by transp), D3 दृष्ट्वा सत्वा — $^c$) T3 G2 भीमेन (for विहीन) D5 7 -यो धाश्च, M1-4 योधैश्च

17 B2 missing (cf v 1 11) — $^a$) K2 corrupt. B3 सर्वसिद्धाम्यान, Dn D2 °सिद्धांश्च, D3 10 11 °त सिद्धान, D5 7 °योधाश्च (for °सिद्धार्थान्) D1 कृतकार्या ग्रगम्याते — $^c$) Ś1 K1-3 -चाप, D1 ध्वज (for -शब्द) D रथाग्र् (for रवाद्) B1 5 T1 4 G [ह्य]पि (for [ण्]त्र) — $^d$) G3 जित्वा (for श्रुत्वा)

18 B2 missing (cf v 1 11) — $^b$) K2 कल्मलेशा भिसतृत (sic), D1 भयग्रस्तो बभूव ह, D4 कश्मलेन समा वृत — $^c$) D1 अपयातु (for °याने) K1 5 मतिं (for मनश्) — $^d$) D3 -वाहनं (for -वाहन) — After 18, S ins an addl colophon [*Adhy name* M2 सैन्यक्षय — *Adhy no* (figures, words or both) S 29]

19 B2 missing (cf v 1 11) G1 3 om 19-20 — $^b$) T3 4 G2 निशेष — $^c$) K3-5 B (B2 missing) D (except Dn3 D1 6) बले (for बल) Ś1 K1 2 Dn D2 5 7 संते — $^d$) D5 7 T3 4 G2 M कि शेषमभवत्तदा — $^e$) T1 2 पुत्र (for एतन्) Ś1 K1 2 T4 पृच्छते

20 B2 missing (cf v 1 11) G1 3 om 20 (cf v 1 19) D1 om. 20 — $^a$) Ś1 K1 2 यत्तु, B1 यथा (for यच्च) T2 मानी (for मन्द) — B1 om 20$^{cd}$, M1 reads it after 22 — $^c$) B3 4 Dn1 n3 D2 5 7-9 T2 तदा, D1 ततो, T3 हृद, T4 G2 इमं, M महद् (for तथा) — $^d$) Dn1 n3 स एव, T1 2 कुशल, M3 य एक (for स एक)

21 B2 missing (cf v 1 11) — $^a$) T3 G2 च (for द्वे) G3 सहस्रं T3 द्वे (for तु) T1 2 द्वे सहस्रे रथाना तु — After 21$^b$, T3 reads 22$^{ab}$ for the first time, repeating it in its proper place — $^c$) D3 एव चास्य (for पञ्च चाश्व) K3 -सहस्रेण, T1 2 °स्राणा (for स्राणि) — $^d$) D3 om, D4 तु (for च) D3 वश (for शत) K4 5 D4 शत (for शता) D1 T1 2 पत्तीनामयुत तथा, T3 4 G पत्ती(T3 सप्त)नाम युतानि च, M पत्तयो द्विगुणं तत

22 B2 missing (cf v 1 11) T3 reads 22$^{ab}$ for the first time after 21$^b$ — $^b$) Ś1 K1 2 महद्बले, D1 4 9 T1 2 महाबल, T3 (first time) महात्मना, T3 (second time) 4 G M बल तदा (for महद्बलम्) — $^c$) S (except T1 2) यत्प्रगृह्य (for परि°) K4 5 D4 हि (D4 तु) तद्युद्धे, D5 7 ययौ युद्धे, T3 ययैवेंद्रो, T4 G1 3 सुयुद्धे वै, G2 [ए]व सुयुद्धे, M स वै युद्धे — After 22, M1 reads 20$^{cd}$

23 B2 missing (cf v 1 11) — $^a$) T3 एको हि (for एकाकी) M2-4 भरतश्रेष्ठम् — $^b$) B4 D1 6-7 M3 4 नृप — $^c$) K4 5 D2 8 10 T2 G3 M2 किंचित्, D3 T4 G2 M1 कश्चित् (for कंचित्) — $^d$) M1 सखायं Dn2 n3 धरं, D3 T4 वर (for वरः)

24 B2 missing (cf v 1 11) K4 5 om 24$^a$-25$^b$ — $^a$) T1 2 यतमानान् (for नर्द°) Dn1 D1 3 4 6 10 11 T1 2 दृष्ट्वा (for चैव) — $^b$) D2 स्वयलस्य, D3 सुव लस्य (for स्वब°) K3 Dn1 n3 D2 8 च सक्षये (K3 °य), D3 बलक्षय (for च स) — After 24$^b$, B (B2 missing) Dn D2 3, 5 7-11 ins

C 9 1593
B 9 29 27
K 9 29 7

एकादशचमूभर्ता पुत्रो दुर्योधनस्तव ।
गदामादाय तेजस्वी पदातिः प्रस्थितो ह्रदम् ॥ २५
नातिदूरं ततो गत्वा पद्भ्यामेव नराधिपः ।
सस्मार वचनं क्षत्तुर्धर्मशीलस्य धीमतः ॥ २६
इदं नूनं महाप्राज्ञो विदुरो दृष्टवान्पुरा ।
महद्वैशसमस्माकं क्षत्रियाणां च संयुगे ॥ २७
एवं विचिन्तयानस्तु प्रविविक्षुर्ह्रदं नृपः ।
दुःखसंतप्तहृदयो दृष्ट्वा राजन्बलक्षयम् ॥ २८
पाण्डवाश्च महाराज धृष्टद्युम्नपुरोगमाः ।
अभ्यधावन्त संक्रुद्धास्तव राजन्बलं प्रति ॥ २९
शक्त्यृष्टिप्रासहस्तानां बलानामभिगर्जताम् ।
संकल्पमकरोन्मोघं गाण्डीवेन धनंजयः ॥ ३०
तान्हत्वा निशितैर्बाणैः सामात्यान्सह बन्धुभिः ।
रथे श्वेतहये तिष्ठन्नर्जुनो बह्वशोभत ॥ ३१

---

170* तथा दृष्ट्वा महाराज एक स पृथिवीपतिः ।

[ Dn1 एक स, Dn2 n3 D7 स एका (D7 °क) (for एक स) ]

On the other hand, S ins

171* दृष्ट्वा भरतशार्दूल कश्मलेनाभिसंवृत ।

[ post half = 18^b ]

— ^c) T4 G2 M2 स त, M1 3 4 रथं (for हत) Ś1 K1 D7 स्व, Dn D2 M1 3 4 स, D3 च, D8 तु, D9 सु, T4 G2 M2 स्म (for स्व) D4 यलम् (for -हयम्) G1 स त स्म भरत त्यज्य, G3 सत्वर स रथ त्यज्य — ^d) T1 2 प्रोत्सृज्य (for प्राङ्मुख) M3 प्रद्र वत् B1 3 5 Dn D2 6 9 रणात् (for भयात्) D7 प्राद्रवत्प्राङ्मुखो रणात्

25 B3 missing (cf v 1 11) K4 5 om 25^{ab} (cf v 1 24) — ^c) D8 चादाय (for आ°) K3 ता प्राज्ञो (for तेजस्वी) — K3 om (hapl) 25^d–27^a — ^d) D5 7 प्रसृतो (for प्रस्थितो) K4 5 Dn2 n3 D1 M1 2 4 द्रुत; Dn1 ध्रुवं, D6 वन, D8 यदि, T4 भृश (for ह्रदम्)

26 B3 missing (cf v 1 11) K3 om. 26 (cf. v. 1 25) — ^a) Dn D2 5 7 दूरात् (for दूरं) — ^b) K5 Dn1 D5 M3 नराधिप, T2 जनाधिप (for नराधिप) — ^c) D4 वचु (for क्षत्तुर्) — ^d) B1 5 पश्यत, D1 धर्मत, T1 भारत (for धीमत) M धर्म ज्ञस्य महात्मन

27 B3 missing (cf v 1 11) K3 om 27^a (cf v 1 25) — ^a) M तु स (M1 सु-) (for नून) M1 महत् (for महा) T1 2 राज (for -प्राज्ञो) — ^b) K2 पुर (for पुरा) — ^c) S व्यसनम् (for वैशसम्) — ^d) S सर्वदा (for संयुगे)

28 B3 missing (cf v 1 11) — ^a) B1 5 D8 9 चिर (for एव) T1 2 च (for तु) D2 एवं विचिन्त मानस्तु, D7 एव चिंतयतस्तस्य, T1 G2 3 M एव चिं (M °तार्थि)तयमानस्तु (M1 °न तु) — ^b) Dn2 प्रवि विक्षे, T2 °वेश (for °विक्षुर्) B3 4 Dn D2 5–9 पुन (for नृप) — D1 om 28^c–32^b — ^c) M सुदु (for दुःख) — ^d) D4 द्रष्टा (for दृष्ट्वा) Dn2 om (hapl) from राज up to स्तव (in 29^d). M2–4 राजा (for राजन्) T2 (sup lin as in text) 4 G1 जन, T3 G3 जगत-, G3 यम (for बल) T3 G2 -त्रय (for -क्षयम्) — After 28, T G ins

172* दशैकाक्षौहिणीभर्ता तथा दुर्योधनोऽपि सन् ।
प्रासयान्म्यमन तीव्र दैवं हि बलवत्तरम् ।

[ (L 1) T2 स्वय, T3 ततो (for तथा) G2 भनत् (for ऽपि सन्) — (L 2) T2 दीप्त (for तीव्र) ]

29 B3 missing (cf. v 1 11) D1 om 29, Dn2 om up to स्तव (for both, cf v 1 28) M3 4 om. 29–30 — ^a) K4 5 D2 10 11 T1 2 तु, B (B3 missing) Dn (Dn2 om) D2 4–7 9 [त्व]पि (for च) — ^c) B1 4 D7 9–11 अभ्यद्रवत D8 T3 4 G अभ्यधावन्मृशं क्रु(D8 G2 °न्सुसंक्रु)द्धास — ^d) D2 बल

30 With 30, cf 3 B3 missing (cf v 1 11) D1 om 30 (cf v 1 28) M3 4 om 30 (cf v 1 29) — ^a) Dn1 D9 T2 G2 3 शक्त्यष्टि-, D8 T3 शक्त्यृष्टि- (D3 °ष्टि) (for शक्त्यृष्टि) K4 D3 -प्राश, D10 -पाश (for प्रास) D9 -हस्ताभ्या — ^b) T3. 4 G M1 3 यो(M1 3 यौ)धानाम् (for बला°) T3 G2 अपि, T4 प्रति (for अभि) — ^c) B5 घोर (for मोघं) — ^d) D4 5 7 गाजीवेन

31 B3 missing (cf v 1 11) D1 om 31 (cf v 1 28) M3 4 read 31–32 after 5 — ^a) M2 4 हत्वा तैर् (for तान्हत्वा) — ^b) M3 बान्धवै (for बन्धुभि) K4 5 सहामात्यै स(K4 °त्यस)बधुभि — ^c)

सुबलस्य हते पुत्रे सवाजिरथकुञ्जरे ।
महावनमिव छिन्नमभवत्तावकं बलम् ॥ ३२
अनेकशतसाहस्रे बले दुर्योधनस्य ह ।
नान्यो महारथो राजञ्जीवमानो व्यदृश्यत ॥ ३३
द्रोणपुत्रादृते वीरात्तथैव कृतवर्मणः ।
कृपाच्च गौतमाद्राजन्पार्थिवाच्च तवात्मजात् ॥ ३४
धृष्टद्युम्नस्तु मां दृष्ट्वा हसन्सात्यकिमब्रवीत् ।
किमनेन गृहीतेन नानेनार्थोऽस्ति जीवता ॥ ३५
धृष्टद्युम्नवचः श्रुत्वा शिनेर्नप्ता महारथः ।
उद्यम्य निशितं खड्गं हन्तुं मामुद्यतस्तदा ॥ ३६
तमागम्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ।
मुच्यतां संजयो जीवन्न हन्तव्यः कथंचन ॥ ३७
द्वैपायनवचः श्रुत्वा शिनेर्नप्ता कृताञ्जलिः ।
ततो मामब्रवीन्मुक्त्वा स्वस्ति संजय साधय ॥ ३८
अनुज्ञातस्त्वहं तेन न्यस्तवर्मा निरायुधः ।
प्रातिष्ठं येन नगरं सायाह्ने रुधिरोक्षितः ॥ ३९
क्रोशमात्रमपक्रान्तं गदापाणिमवस्थितम् ।
एकं दुर्योधनं राजन्नपश्यं भृशविक्षतम् ॥ ४० C 3 1609 B 9 29 42 K 9 29 23

D 7 धनंजयो (for श्वेतहये) B1 D2 5 7-9 राजन् (for विष्टन्) — d) D5 7 सकृष्णो (for अर्जुनो) K3 D3.7 G3 बहु शोभत

32 For the sequence in M3 4, cf v l 31 B2 missing (cf. v l. 11) D1 om $32^{ab}$ (cf. v l. 28) D7 om. $32^{a}$–$33^{b}$ — b) K2 सर्वाजि- (for सवाजि) — After $32^{b}$, G2 reads $33^{ab}$ — c) G2 -वातम् (for वनम्) T4 इति (for इव) Ś1 K1 D3 9 T8 छन्नम् D1 निहत शतसाहस्र — d) D1 सकल, D6 प्राभवद् (for अभवद्) D5 om from बक बलम् up to द्रोण पुत्रा (in $34^{a}$) D2 बळ

33 B2 missing (cf v l 11) D6 om 33, D7 om. $33^{ab}$ (for both, cf v l. 32) D1 om $33^{ab}$ G2 reads $33^{ab}$ after $32^{b}$ — a) Dn1 D4 (sup lin as in text) रथ (for -शत) D8 G2 साहस्रद् — b) Ś1 K1-3 हि, D2 च (for ह) S बले दुर्योधनार्जिते (T2 °नाहृते, G2 ने हते, M1 °नार्पणे) — c) D2 महारथाद् (for °रथो) — d) K3 विदृश्यत, M1 [ऽ]त्र दृश्यते, M3 प्रदृश्यते

34 B2 missing (cf. v l 11) D6 om द्रोण पुत्रा (cf v l 32) — a) D5 7 राजन् (for वीराद्) — T4 om $34^{b}$–$36^{a}$ — b) T3 कृपाच्च, G3 तथा च (for तथैव) — cd) T3 कृपश्च कृतवर्मा च पार्थिवश्च सवात्मज

35 B2 missing (cf. v l. 11) T4 om 35 (cf. v l 34) D6 om. (hapl.) 35 — a) K4 5 च (for तु) — Ś1 K1-3 om $35^{b}$–$38^{a}$ — b) K5 रसन्, D3 10 11 स ह, D4 रयं (for हसन्) — c) D4 किमु तेन (for किमनेन) — d) K4 [अ]र्थेन, M1 [अ]र्थो हि (for [अ]र्थोऽस्ति) D1 रिपुमित्र हि मारय

36 B2 missing (cf. v l 11) T4 om $36^{a}$ (cf v l 34) Ś1 K1-3 om. 36 (cf v l. 35) — b) D1 शनेर् (for शिनेर्) — d) K4 5 Dn2 n3 D4 हतु (sic), D10 हत (for हन्तुं) D3 तथा

37 B2 missing (cf. v l 11) Ś1 K1-3 om. 37 (cf. v l 35) — a) K4 5 समासाद्य, D1 T3 4 G तदागम्य (D1 °त्य), D4 ततस्तु वै, T1 2 समागम्य (for तमा°) Dn2 n3 महाप्राज्ञ, M1 प्रज्ञ (for प्राज्ञ°) — b) G3 (before corr as in text) मुनि (for ऽब्रवीत्) — c) Dn D5 राजन् (for जीवन्) — d) T2 नायं वध्य (for न हन्तव्य) B (B2 missing) Dn D5 7-9 कदाचन (for कथं)

38 B2 missing (cf v l 11) Ś1 K1-3 om. $38^{a}$ (cf. v l 35) — b) D1 शनेर् (for शिनेर्) K1 घृताञ्जलिं, D2 °जळि, T4 महात्मन (for कृताञ्जलि°) — d) K2 3 माधव (sic), K4 5 गम्यता (for साधय)

39 B2 missing (cf v l 11) — a) S हि (for तु) — b) D1 त्यक्त (for न्यस्त) — c) K4 प्रतिष्ठद्, Dn2 D9 प्रतिष्ठं, Dn3 G1 3 प्र(G3 प्रा)तिष्ठे, D1 अगच्छ, D3 प्रविशन् (for प्रातिष्ठ) K4 5 यत्र, D1 तात, D3 एव (for येन) D11 नगरे, T4 रुधिर (for नगर)

40 B2 missing (cf v l 11) — a) K4.5 अतिक्रान्तं, Dn D5 6 8 10 T2 G3 M3 4 अपा, D3 समा°, M3 अवा° (for अप°) — Ś1 K1-3 om. $40^{c}$–$41^{b}$ K4 om (hapl.) $40^{c}$–$41^{d}$ K5 reads $40^{cd}$ on marg — c) D3 (second time) ततो (for एक) D3 (first time) दृष्ट्वा (for राजन्) — After $40^{c}$, the sequence in

C 9 1609
B 9 29 43
K 9 27 21

स तु मामश्रुपूर्णाक्षो नाशक्नोदभिवीक्षितुम् ।
उपप्रैक्षत मां दृष्ट्वा तदा दीनमवस्थितम् ॥ ४१
तं चाहमपि शोचन्तं दृष्ट्वैकाकिनमाहवे ।
मुहूर्तं नाशकं वक्तुं किंचिद्दुःखपरिप्लुतः ॥ ४२

ततोऽस्मै तदहं सर्वमुक्तवान्ग्रहणं तदा ।
द्वैपायनप्रसादाच्च जीवतो मोक्षमाहवे ॥ ४३
मुहूर्तमिव च ध्यात्वा प्रतिलभ्य च चेतनाम् ।
भ्रातॄंश्च सर्वसैन्यानि पर्यपृच्छत मां ततः ॥ ४४

---

D3 is $42^{d}$, $43^{ab}$, $40^{c}$ (r), $40^{d}$–$42^{b}$, 44, $42^{c}$, $42^{d}$–$43^{b}$ (r), $43^{cd}$, 45 — $^{d}$) Dn भूरि-, D4 शर (for भृश) Dn2 D2 3. 5 7 वि(D7 वी)क्षित (for क्षतम्) T4 पश्यामि भृशमीक्षित

41 For the sequence in D3, cf v 1 40 B2 missing (cf v 1 11) Ś1 K1–3 om $41^{ab}$, K4 om 41 (for both, cf v 1 40) — $^{b}$) K5 B (B2 missing) Dn D2 5 6 8 न शक्नोति (for नाशक्नोद्) Dn भाषितु, D1 3 वीक्षित (for वीक्षितुम्) — D1 om $41^{cd}$ — $^{c}$) B3 D8 T2 M1, 3 प्रेक्ष(T2 °क्ष्य)त D3 मा (for मां) — $^{d}$) D3–5 7 8 10 11 T3 4 G2 M तथा (for तदा) K2 भीमम्, Dn चैकम् (for दीनम्) G M1 2 उपस्थित (for अव) D2 तदनीकमवस्थितं

42 For the sequence in D3, cf v 1 40 B2 missing (cf v 1 11) — $^{a}$) D6 तद्रा (for त च) D3 अभिशोचतं, S (except T1, 2) अनुशोचानो (M1 2 4 °चन्तं) (for अपि शोचन्त) — $^{b}$) Ś1 K1–3 दृष्ट्वैवैकाकिन रणे — $^{c}$) D5 7 नाशकद् (for °कं) — $^{d}$) Ś1 K1–3 D10 11 अति (for किंचिद्) — After 42, T G ins

173* यस्य मूर्धावसिक्ताना सहस्र मणिमौलिनाम् ।
आहृत्य च कर सर्वं स्वस्य वै वशमागतम् ।
चतु सागरपर्यन्ता पृथिवी रत्नभूषिता ।
कर्णेनैकेन यस्यार्थे करमाहारिता पुरा ।
यस्याज्ञा परराष्ट्रेषु कर्णेनैव प्रसारिता ।
नाभवद्यस्य शस्त्रेषु खेदो राज्ञ प्रशासत ।
आसीनो हस्तिनपुरे क्षेमं राज्यमकण्टकम् ।
अन्वपालयदैश्वर्यात्कुबेरमपि नास्मरत् ।
भवनाद्भवनं राजन्प्रयातु पृथिवीपते ।
देवालयप्रवेशे च पन्था यस्य हिरण्मय ।
पताकावृतसूर्यांशुतोरणोच्छ्रितशोभिन ।
प्रयाणे पृथिवीभर्तुर्धन्यानाममवन्गृहा ।
आरुह्यैरावतप्रख्यं नागमिन्द्रसमो बली ।
विभूत्या सुमहत्या य प्रयाति पृथिवीपते ।
त भृशं क्षतमिन्द्राभ पश्यामेव धरातले ।
विष्टन्तमेक दृष्ट्वा तु ममाभूत्क्लेश उत्तम ।
तस्य चैवविधस्याद्य जगन्नाथस्य भूपते ।
आपदप्रतिमैवाभूद्बलीयान्विधिरेव हि ।

[(L. 2) T3 G2 यस्य (for स्वस्य) T1 G1 (sup lin as above) वेश्म समागत, T2 3 वेश्मसमा° (for वै वशमा°) — (L 4) T2 3 आहारित (for °रिता) — (L 5) T3 यस्याज्ञा पततो राष्ट्रे (for the prior half) — (L 6) T3 भेदो (for खेदो) — (L 7) T1 G1 (sup lin) हास्तिनपुरे — (L 8) T1–3 G1 नास्मरन् (for °रत्) — (L 9) G3 भगवान्भगवन्नाजन् (corrupt) (for the prior half) T3 पृथिवीतले (for °पते) — (L 10) T1 3 G1 प्रदेशे (for प्रवेशे) — (L 11) T3 -शूलांशु, T4 G2 3 -सूर्यांशुस् (for सूर्यांशु-) T3 -शोभिता, T4 शोभन, G2 3 -शोभित (for -शोभिन) — (L 14) T4 प्रयातु (for °ति) T3 4 G2 पृथिवीपति° — (L 15) T2 भृश- (for भृश) — (L 16) T1 G1 2 त दृष्ट्वा (for दृष्ट्वा तु) — (L 17) T1 G1 [अ]स्य (for [अ]द्य) T2 तस्य चैवविध नान्यज् (for the prior half) T1 G1 2 भूपते (for °ते) — (L 18) T2 विपद् (for आपद्) T2 [अ]भूया, T3 4 याभूद् (for [ए]वाभूद्) ]

43 For the sequence in D3, cf. v 1 40 B2 missing (cf v 1 11) — $^{a}$) T4 [ऽ]स्य (for ऽस्मै) T4 इद (for अह) — $^{b}$) T G नृपतेस् (T3 °ते) (for ग्रहण) D1 उक्त च ग्रहणादिक — $^{c}$) D8 द्वैपायन समासाद्य — $^{d}$) K2 corrupt. K4 5 D1 2 5 T3 4 G2 3 जीवितो (K5 °नो) (for जीवतो) Ś1 K1 3 D10, 11 आत्मन (for आहवे) D3 जीवितोह महाहवे

44 For the sequence in D3, cf v 1 40 B2 missing (cf. v 1 11) — $^{a}$) Dn2 n3 D2 5 7 अपि (for इव) K4 5 तद् (for च) K2 3 D1, 3, 4, 10 11 S स मु(K3 D3 4 T4 सुमु)हूर्तमिव ध्या(D3 °मवध्या)त्वा, Dn1 सुमुहूर्तमपि च ध्यात्वा (hypermetric) — $^{b}$) D2 पुनर् (for प्रति) T3 तु (for च) D6 चेतन — $^{c}$) D5 om (hapl.) from सैन्यानि up to सर्वान् (in $45^{c}$) S सैन्याश्च (for सैन्यानि) — $^{d}$) K4 5 B (B2 missing) Dn D2 3. 5 7–9 समपृच्छत, M1 पर्यपृच्छच (for °पृच्छत) T3 4 G तास्, M1 मा (for मां) Dn1 D1 9 T4 G2 3 तदा, T3 तथा (for तत)

तस्मै तदहमाचक्षं सर्वं प्रत्यक्षदर्शिवान् ।
भ्रातॄंश्च निहतान्सर्वान्सैन्यं च विनिपातितम् ॥ ४५
त्रयः किल रथाः शिष्टास्तावकानां नराधिप ।
इति प्रस्थानकाले मां कृष्णद्वैपायनोऽब्रवीत् ॥ ४६
स दीर्घमिव निःश्वस्य विप्रेक्ष्य च पुनः पुनः ।
अंसे मां पाणिना स्पृष्ट्वा पुत्रस्ते पर्यभाषत ॥ ४७
त्वदन्यो नेह संग्रामे कश्चिज्जीवति संजय ।
द्वितीयं नेह पश्यामि ससहायाश्च पाण्डवाः ॥ ४८
ब्रूयाः संजय राजानं प्रज्ञाचक्षुषमीश्वरम् ।
दुर्योधनस्तव सुतः प्रविष्टो ह्रदमित्युत ॥ ४९
सुहृद्भिस्तादृशैर्हीनः पुत्रैर्भ्रातृभिरेव च ।
पाण्डवैश्च हृते राज्ये को नु जीवति मादृशः ॥ ५०
आचक्षेथाः सर्वमिदं मां च मुक्तं महाहवात् ।
अस्मिंस्तोयह्रदे सुप्तं जीवन्तं भृशविक्षतम् ॥ ५१
एवमुक्त्वा महाराज प्राविशत्तं ह्रदं नृपः ।
अस्तम्भयत तोयं च मायया मनुजाधिपः ॥ ५२
तस्मिन्ह्रदं प्रविष्टे तु त्रीन्रथाञ्श्रान्तवाहनान् ।
अपश्यं सहितानेकस्तं देशं समुपेयुषः ॥ ५३ C 9 1622 B 9 29 55 K 9 29 45

45 For the sequence in D3, cf v l. 40 B2 missing (cf v l 11) D- om 45ᵃᵇᶜ (cf v l 44) — ᵃ) K3 Dn D1. 2 4 5 - 9-11 T2-4 M आचक्षे (D3 °क्षं), T1 G आचष्टे (for क्ष) K4 - तस्मै सर्वाहमा चक्ष्ये — ᵇ) K2. 3 D2 7 10 सर्व (for सर्वं) Ś1 K1 2 दर्शन, K3 दर्शन, D1 G1 दर्शनात् (for दर्शिवान्) — ᶜ) T1 भ्रातृणा निधन सर्वं — ᵈ) D1 सैन्यानां (for सैन्यं) T G1 3 सैन्याना च निपातन, G2 M सैनिकाश्च (G2 °न्याश्चैव) निपातितान

46 B2 missing (cf. v l 11) — ᵃ) D- किल G2 नरा (for रथा) D3 स्पृष्ट्वा (for शिष्टास्) — ᵇ) D2 जनाधिप (for नरा°) — ᶜ) D1 प्रति- (for इति) D3 -काले K1 5 [s]थं, Dn D- 5 (*sup lin* as in text) तु (for मा)

47 B missing (cf v l 11) — ᵃ) M1 सदीपम् (for स दीर्घम्) Dn D- - 7 अथ M इव (for इव) Some MSS निश्वस्य — ᵇ) D1 समीक्ष्य च, D3 10 11 प्रत्यवेक्ष्य, D1 T1 2 समेक्ष्य च, T3 4 G विप्रेक्षत (for विप्रेक्ष्य च) Ś1 K1-3 मुहुर्मुहु (for पुन पुन) — ᶜ) K2-- D2 अग्रे, B (B2 missing) Dn D2 7-11 अमौ, D2 G3 बाहू (for अंसे) T2 गृह्य (for स्पृष्ट्वा) T2 अनिना प्राणिना स्पृष्ट्वा (sic) — ᵈ) T3. 4 G1 3 मर तर्पम, G2 M प्रत्यभाषत (for पर्य°)

48 B2 missing (cf v l 11) — ᵃ) S (except T1 2) त्वत्तोन्यो (for त्वदन्यो) T2 [त्]'व, G2 हि (for [इ]ह) — ᵇ) D2 कश्चिज् (for कश्चिन्) T2 [अ]सशयं (for संजय) — ᶜ) B (B2 missing) Dn D- 5 7-9 न हि, D3 इह न, D1 G1 2 M2 4 नैव (for नेह) — ᵈ) G2 सुमहायाश्च. D1 आक्षिप्य स्वद्वते पुन (sic)

49 B2 missing (cf. v l 11) — ᵃ) D1. 5 7 ब्रूयात्, M2 4 ब्रूहि — ᵇ) T4 प्राज्ञ (for प्रज्ञा) D6 ईदृश (for ईश्वरम्) — B1 damaged for 49ᶜ–50ᵇ

50 B2 missing (cf. v l. 11) B1 damaged for 50ᵃᵇ — ᵃ) D4 T3 तावकैर् (for तादृशैर्) — ᶜ) D8 हृते, D10 हृतो (for हृते) D8 राष्ट्रे (for राज्ये) — ᵈ) K1 5 B (B2 missing) D (except D3) T1-3 M1 जीवेत (for जीवति)

51 B2 missing (cf v l 11) — ᵃ) K4 5 B (B2 missing) D1 2 4-11 T1 G1 M आचक्षीथा, D8 अवाक्शिरा, T2 आचक्षे वा (for °क्षेथा) G1 सर्वमय (for मिद) — ᵇ) D1 9 युक्त (for मुक्त) K1 5 T G महाभयात्, B (B2 missing) D3 9 °हवे, D8 चल (for °हवात्) — ᶜ) K2 असमे (sic), T8 तस्मिंस् (for अ°) G2 तोये (for तोय) D10 11 T1 G2 3 गुप्त (for सुप्त) — ᵈ) Dn1 n3 D9 जीवत, D2 जीवित (for जीवन्त) K3 5 Dn2 n3 D2 3 5 7 विक्षितं (for -विक्षतम्)

52 B2 missing (cf. v l 11) — ᵇ) D2 10 प्रा विश, D1 प्रविष्टस्, M8 प्राविशस् (for °शत्) T8 G2 तद् (for त) K8 B5 D10 11 महाह्रद (K3 °द), K5 Dn2 n3 D1 2 6 T2 8 G8 M2 8 ह्रदं नृप (Dn2 n3 °प), D3 महारथ, D1 ह्रद तत (for ह्रद नृप) — ᶜ) K2 अस्तभायत — ᵈ) D5 7 T1 G8 M1 मनुजा धिप

53 B2 missing (cf v l. 11) D2 om 53 — ᵃ) K1 5 B1 D (D2 om) T1-3 M2-4 ह्रदे, T4 नृपे (for ह्रदं) — ᵇ) K2 3 वि (for त्रीन्) T2 भ्रात (for श्रान्त) — ᶜ) D1 तत्र; S (except T1 2 G1) एव

C 9 1612
B 9 29 56
K 9 29 46

कृपं शारद्वतं वीरं द्रौणिं च रथिनां वरम् ।
भोजं च कृतवर्माणं सहिताञ्शरविक्षतान् ॥ ५४
ते सर्वे मामभिप्रेक्ष्य तूर्णमश्वानचोदयन् ।
उपयाय च मामूचुर्दिष्ट्या जीवसि संजय ॥ ५५
अपृच्छंश्चैव मां सर्वे पुत्रं तव जनाधिपम् ।
कच्चिद्दुर्योधनो राजा स नो जीवति संजय ॥ ५६
आख्यातवानहं तेभ्यस्तदा कुशलिनं नृपम् ।
तच्चैव सर्वमाचक्षं यन्मां दुर्योधनोऽब्रवीत् ।
ह्रदं चैवाहमाचष्ट यं प्रविष्टो नराधिपः ॥ ५७
अश्वत्थामा तु तद्राजन्निशम्य वचनं मम ।
तं ह्रदं विपुलं प्रेक्ष्य करुणं पर्यदेवयत् ॥ ५८
अहो धिङ्न स जानाति जीवतोऽस्मान्नराधिपः ।
पर्याप्ता हि वयं तेन सह योधयितुं परान् ॥ ५९
ते तु तत्र चिरं कालं विलप्य च महारथाः ।
प्राद्रवन्रथिनां श्रेष्ठा दृष्ट्वा पाण्डुसुतान्रणे ॥ ६०
ते तु मां रथमारोप्य कृपस्य सुपरिष्कृतम् ।
सेनानिवेशमाजग्मुर्हतशेषास्त्रयो रथाः ॥ ६१
तत्र गुल्माः परित्रस्ताः सूर्ये चास्तमिते सति ।

---

(for एकस्) — $^{d}$) T8 दिश (for देश) K8 D8 समुपायुपं (D8 °प)

54 B2 missing (cf v l 11) — $^{a}$) D8 4 10 सारद्व(D8 °घ)त Dn D2 5 7 चैव, D8 वीर, T8 धीर (for वीर) — $^{b}$) K2 Dn D3 वर (for वरम्) — $^{d}$) D1 क्षत्यर्त (for सहिताम्) D4 T8 G1 2 M भृश-, G8 भ्रातृ (for शर-) K8 D2 8 7 G3 त्रि( G3 वी )क्षितान्, Dn1 वीक्षतान्

55 B2 missing (cf v l 11) — $^{a}$) M2 4 सर्वे च (for ते सर्वे) D1 मामिद प्रोचुर्, T1-3 समभि( T8 °ति )प्रेक्ष्य, T4 G M समति( M8 °भि )क्रम्य (for मामभिप्रेक्ष्य) — D1 om (hapl) $55^{bc}$ — $^{b}$) K2 वाढम् (sic) (for तूर्णम्) K2 4 5 Dn1 D2-5 7 10 11 T4 क्षनोदयन् — $^{c}$) Ś1 K1-4 D8 4 उपा( K4 °पे )याय, D7 M1 2 4 उप( D7 °पा )गम्य, T4 उपधाय (for °याय). Dn1 D8 4 10 11 तु (for च) T1 2 उपेत्य चैव मामूचुर् — $^{d}$) S (except T1 2) दिष्ट्या सजय जीवसि

56 B2 missing (cf v l 11) Ś1 K1-3 Dn1 n2 om (hapl) 56, Dn8 reads it on marg D1 om $56^{ab}$ — $^{a}$) D3 corrupt B (B2 missing) D2 7-9 [ए]व ते; G1 8 इमं (for [ए]व मा) — $^{b}$) K4 5 Dn3 D3 4 6 8 10 T1 2 M8 जनाधिप (D3 4 °प), D2 8 7 नराधिप (D7 °प) (for जनाधिपम्) — $^{c}$) T2 किंचिद् (for कच्चिद्) — $^{d}$) D5 (marg) ब्रूहि (for स नो)

57 B2 missing (cf v l 11) — $^{b}$) D4 T8 तथा (for तदा) K4 5 D1 नृप, M8 तव (for नृपम्) — $^{c}$) K4 5 Dn D2 5 7 T8 4 तथैव (T4 °वं), D1 T2 G8 तथैवं (for °व) K2 आचक्ष्यं; K4 5 D8 °ख्यौ, Dn D1 2 4 5 7 10 T1 2 4 G M °क्षे, D3 °क्ष्ये, T8 °ष्टे (for °क्षं) — D8 om (hapl) $57^{de}$ — $^{d}$) K4 यस्माद्; D4 M1 2 4 यन्मा (for यन्मां) — D3 om $57^{e}$–$58^{d}$ B1 damaged for $57^{ef}$ — $^{e}$) K4 आचष्ट, B1 8 5 D4 6 9-11 °क्षं (D4 10 °क्ष्यं), Dn D2 G M1 8 4 °क्षे (Dn2 ns °क्ष्ये), D5 7 °ख्ये, T8 4 °ष्टे (for °ष्ट) T1 ह्रद चैव समाचक्ष, T2 °वाचचक्षेयं — $^{f}$) D1 6 T G M1 2 जनाधिप, D9 M8 नराधिप (for °धिप)

58 B2 missing (cf. v l 11) D8 om 58 (cf v l 57) K4 5 B1 om (hapl) $58^{a}$–$59^{b}$ — $^{a}$) Dn D2 5 7 स्तदद् (for तु तद्) — $^{b}$) T8 4 G1, 8 नृप (for मम) — $^{c}$) D4 ते (for त) S ह्रदप्रवेश श्रुत्वा च (T4 G2 तु)

59 B2 missing (cf. v l 11) K4 5 B1 om $59^{ab}$ (cf v l 58) D8 om $59^{ab}$ — $^{a}$) Ś1 K1 8 मा न, B4 Dn8 D8 11 T3 स न (by transp), D1 त स, T4 च स, G2 मा स T3 जानीते — $^{b}$) K8 जीवतो, D8 5 जीवितो (for जीवतो) T8 जीवत स नराधिप· — $^{c}$) D7 पर्याप्ता, T3 समर्था (for पर्याप्ता) — $^{d}$) T8 वय (for सह) G2 सह योद्धुं परान्प्रति

60 B2 missing (cf. v l 11) — $^{a}$) D2 7 काळ — $^{b}$) D4 विलप्य सु, T8, 4 G M1 प्रविलप्य, M2-4 विप्रलप्य (for विलप्य च) — D8 om (hapl) $60^{c}$–$61^{d}$ — $^{c}$) Dn1 रथिन (for °ना) B5 D8 9 M श्रेष्ठान् — $^{d}$) D2 5 7 पाण्डुपुत्रभयार्दिता

61 B2 missing (cf. v l 11) D8 om 61 (cf. v l. 60) — $^{b}$) D4 कृपण, T8 नृपस्य (for कृपस्य) K4 5 Dn1, n8 D4 5 7-10 M सुपरिस्कृ( D4 °स्थि, D9 °कृ, M °क्ष )तं; D1 परिसंस्कृतं; T G1 8 तु परिष्कृ

सर्वे विचुक्रुशुः श्रुत्वा पुत्राणां तव संक्षयम् ॥ ६२
ततो वृद्धा महाराज योषितां रक्षिणो नराः ।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥ ६३
तत्र विक्रोशतीनां च रुदतीनां च सर्वशः ।
प्रादुरासीन्महाञ्शब्दः श्रुत्वा तद्बलसंक्षयम् ॥ ६४
ततस्ता योषितो राजन्क्रन्दन्त्यो वै मुहुर्मुहुः ।
कुरर्य इव शब्देन नादयन्त्यो महीतलम् ॥ ६५
आजघ्नुः करजैश्चापि पाणिभिश्च शिरांस्युत ।
लुलुवुश्च तदा केशान्क्रोशन्त्यस्तत्र तत्र ह ॥ ६६
हाहाकारविनादिन्यो विनिघ्नन्त्य उरांसि च ।
क्रोशन्त्यस्तत्र रुरुदुः क्रन्दमाना विशां पते ॥ ६७
ततो दुर्योधनामात्याः साश्रुकण्ठा भृशातुराः ।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥ ६८
वेत्रजर्झरहस्ताश्च द्वाराध्यक्षा विशां पते । C. 9 1633 B. 9. 29. 71 K. 9. 23. 61

---

(T2 4 G3 °श्रि)त (for सुपरि°) G2 समाश्वास्य परिक्षत — B4 damaged for 61ᶜ–62ᵈ —ᶜ) D2 सेनाविश्म जगामासुर् (sic) —ᵈ) B5 S (except T1 2) -शिष्टास् (for शेषास्) D4 जना (for रथा)

62 B2 missing (cf. v l 11) B4 damaged —ᵃ) K4 5 ते तु, D4 अत्र, M यत्र (for तत्र) K4 D3 M1 गुल्म, D6 गुल्मान्, G2 गुल्मै, M3 गुल्म (for गुल्मा) S क्षिप्ता (M1 °सं, M3 °स) (for त्रस्ता) —ᵇ) D4 M3 4 नृप, M1 2 नृपे (for सति) D1 सूर्ये चास्तमितेऽजमि —Dn3 reads 62ᶜᵈ twice —ᶜ) T3 4 G2 M1–3 च, M4 प्र- (for वि-)

63 B2 missing (cf v l. 11) K5 Dn D5 T1 om. (hapl.) 63–64 —ᵃ) D3 मृधा (for वृद्धा) —ᵇ) D8 रक्षका, G3 रक्षितो (for रक्षिणो) K2 नर, D2 5 T3 4 G M3 जना, D1 (marg as in text) युवा (for नरा) K4 T2 योषिता रक्षणे रता — After 63, K3 reads 69ᵃᵇ

64 B2 missing (cf v l. 11) K5 Dn D5 T1 om 64 (cf v l. 63) K3 om. (hapl.) 64–67 —ᵃ) D11 तत्र विक्रोशमानाना —ᵇ) D4 T3 रुदतीना S (T1 om) निस्वन (for सर्वश) —ᶜ) K2 4 D2–5 7 8 11 S (T1 om) महा- (for महान्) S (T1 om.) -घोर- (T4 G1 M3 °र) (for शब्द) — B4 damaged for 64ᵈ–65ᵇ —ᵈ) K4 D1 G M3 त, T (T1 om.) तु (for तद्-)

65 B2 missing (cf. v l 11) K3 om 65 (cf. v l. 64) D1 om 65–66 B4 damaged for 65ᵃᵇ —ᵃ) K1. 5 B1. 3 5 Dn D2 ..9 T1–3 तु (for ता) —ᵇ) K2 D3. 10 11 M1 2 4 रुदत्य (for क्रन्दन्त्यो) K2 om (hapl ) from वै up to नादयन्त्यो (in 65ᵈ) K4 5 M2 4 च, D3 9 [ऽ]पि (for वै) —ᶜ) D1 कुररी (for कुरर्य) M1 2 4 नादेन (for शब्देन) —ᵈ) K4 D5 नादयतो, D10 नदयत्यो (for नाद°) D2 T3 महीतळ, D6 महद्बलं

66 B2 missing (cf v l 11) K3 om 66 (cf v l. 64) D1 om. 66 (cf. v l. 65) —ᵃ) Ś1 K1. 2 याहुन (for चापि) M आजघ्नु पाणिभि शोकाद् —ᵇ) D10 corrupt. M उरासि (for पाणिभिश्) K4 5 [उ]र, B1 M च (for [उ]त) — B4 damaged for 66ᶜ–67ᵇ —ᶜ) K4 B1. 5 D3 8 9 11 लुलुचुश्, K5 लुलुञ्चुश् (sic), B3 मुमुचुश्, Dn D2 6 7 10 लुलुचुश्, T1 4 G °चुश् (for वुश्) B3 T2 3 M1 तथा (for तदा) — Ś1 K1 2 om. 66ᵈ–67ᶜ —ᵈ) D2–5 क्रोश तस्, D6 क्रदत्यस् (for क्रोशन्त्यस्)

67 B2 missing for 67ᵃᵇ (cf. v l. 11) K3 om. 67 (cf v l. 64) Ś1 K1. 2 om 67ᵃᵇᶜ (cf v l 66) B4 damaged for 67ᵃᵇ —ᵃ) K4 5 D5 हाहाभूत, T G °कार, M1 °कारान् (for °कार) D1 निनादिन्यो, D3 विनादत्यो, T1 2 विधु(T2 °धृ)न्वाना, T3 4 G विकुर्वत्यो, M1 वदत्यो वै (for विनादिन्यो) —ᵇ) K4 5 B3 5 Dn2 n3 D1 2 6 T1. 2 विनिघ्नाना (for °घ्नन्त्य) Dn D5 6 7 [उ]त (for च) S (except T1. 2) विनिघ्नन्त्यु(G2 °त्यो)दराणि च —ᶜ) B2 D10 11 शोचत्यस् (for क्रोश°) M विक्रोशत्यश्च (M1 °त्य प्र) रुरुदु

68 D3 om (hapl) 68ᵃ–69ᵇ —ᵃ) D1 ते तु (for ततो) K3–5 Dn2 दुर्योधनोमात्या (sic) —ᵇ) T1 G M साश्र (for साश्रु) K4 5 B3 D5–7 भयातुरा, D1 भृश तदा, M3 दुरामदा (for भृशातुरा) — K3 reads 68ᶜᵈ twice —ᶜ) T3 उपाहृत्य, T4 G1 3 मध्य (for °दाय)

69 D3 om. 69ᵃᵇ (cf v l 68) B D1 M1 om. (hapl ) 69–70 M2–4 om. 69ᵃᵇ K3 reads 69ᵃᵇ after 63 —ᵃ) T2 तत्र (for वेत्र) K1 3 जर्जर, K4 5 T1 G1 -मर्मर-, B (B5 om) D3 9 व्यासक्त, D1 गहर

C 9 1603
D 9 28 72
K 9 28 61

शयनीयानि शुभ्राणि स्पर्ध्यास्तरणवन्ति च ।
समादाय ययुस्तूर्णं नगरं दाररक्षिणः ॥ ६९
आस्थायाश्वतरीयुक्तान्स्यन्दनानपरे जनाः ।
स्वान्स्वान्दारानुपादाय प्रययुर्नगरं प्रति ॥ ७०
अदृष्टपूर्वा या नार्यो भास्करेणापि वेश्मसु ।
ददृशुस्ता महाराज जना यान्तीः पुरं प्रति ॥ ७१
ताः स्त्रियो भरतश्रेष्ठ सौकुमार्यसमन्विताः ।
प्रययुर्नगरं तूर्णं हतस्वजनबान्धवाः ॥ ७२
आ गोपालाविपालेभ्यो द्रवन्तो नगरं प्रति ।
ययुर्मनुष्याः संभ्रान्ता भीमसेनभयार्दिताः ॥ ७३
अपि चैषां भयं तीव्रं पार्थेभ्योऽभूत्सुदारुणम् ।
प्रेक्षमाणास्तदान्योन्यमाधावन्नगरं प्रति ॥ ७४
तस्मिंस्तदा वर्तमाने विद्रवे भृशदारुणे ।
युयुत्सुः शोकसंमूढः प्राप्तकालमचिन्तयत् ॥ ७५
जितो दुर्योधनः संख्ये पाण्डवैर्भीमविक्रमैः ।
एकादशचमूभर्ता भ्रातरश्चास्य सूदिताः ।
हताश्च कुरवः सर्वे भीष्मद्रोणपुरःसराः ॥ ७६
अहमेको विमुक्तस्तु भाग्ययोगाद्यदृच्छया ।

---

(s10), D6 -मर्मर, T2 3 घुर्घुर (for जर्झर) Dn D2 5 7 10 11 वेत्रासम्(D10 °वश, D11 °वस)कहस्ताश्च — $^{b}$) K4 5 Dn2 n3 दाराध्यक्षा, G1 3 द्वाररक्षा (for द्वाराध्यक्षा) — B4 damaged for $69^{cd}$ — $^{c}$) M (M1 om) रमणीयानि (for शयनी°). — $^{d}$) K2 corrupt K1 4 5 Dn2 n3 D2 4 5 8 10 11 स्पर्धास्तरण, B2 Dn1 D6 स्पर्ध्य°, T2 सृद्वा°, G1 3 स्वाध्या° (for स्पर्ध्या°) M (M1 om) ते (for च) T3 4 G2 स्वध्या(T4 साध्वा)-स्तरणमेव च — $^{e}$) K4 M3 ततस् (for ययुस्) — $^{f}$) Ś1 (*sup lin* as in text) D5 7 द्वार, B (B5 om) D3 8–11 T1 2 जन (for दार-) K3 रक्षण, D2 5 7 रक्ष(D2 °क्षि)का (for रक्षिण) D4 हतस्वजन बांधवा (= $72^{d}$), T3 G नगर रक्षिणस्तदा, T4 °र क्षीण मानसा

70 B5 D1 M1 om 70 (cf v l 69) — $^{a}$) D3 5 युक्ता (for युक्तान्) — $^{b}$) D6 स्यदनेन (for स्यन्दनान्) K3 च परे, K4 5 नगरे (for अपरे) Ś1 K1–3 ययु°, D4 6 10 11 T1 2 पुन° (for जना) T3 4 G M2–4 अपरे स्यंदनान्पुन (G1 °न्पर) — $^{c}$) D4 om (hapl) one स्वान् — After 70, D4 reads $73^{ab}$

71 K3 om (hapl) 71–74 — $^{b}$) G वेश्मनि — $^{c}$) B2 corrupt T3 4 G जना राजस् (for महाराज) — $^{d}$) T3 तथा, T4 G तदा (for जना) B5 D7 यात; Dn1 D2–4 T4 याश्वि, D10 धात्री., G1 3 यात्य (for यान्ती) Dn1 पुरीं (for पुर)

72 K3 om. 72 (cf v l 71) D1 om (hapl) 72–74 — $^{a}$) D10 भारत — $^{b}$) D4 सुकुमार्यसुखा-चिता — $^{c}$) D7 reads from प्रययु up to ययु (in $73^{c}$) on marg D3 प्रययौ (for °युर्) — $^{d}$) T3 4 G M3 पति (for -जन)

73 K3 om 73 (cf v l 71) D1 om 73 (cf v l 72) D4 reads $73^{ab}$ after 70 D7 reads up to ययु on marg — $^{a}$) Dn गोपालाश्वाविपालेभ्यो (Dn2 °लाश्च), D2 आ गोपाळाविपाळेभ्यो, D10 आ गोपालाधिपालेभ्यो — $^{b}$) Ś1 K1 2 T2 द्रवते, K4 5 D6 द्रवंत्यो, D8 स्रुवत्यो, D4 द्रवद्भिर्, T3 4 रुद्(T4 °च)द्भिर्, G1 3 पद्भिस्तन्, G2 रुदंतो, M1 2 4 दुद्रुवुर् (for द्रवन्तो) M3 कुर्वंतो भयमातुरा — Ś1 K1 2 om (hapl) $73^{c}$–$74^{d}$

74 K3 om 74 (cf v l. 71) D1 om 74 (cf v l 72) Ś1 K1 2 om 74 (cf v l. 73) — $^{a}$) D3 आदाव् (for अपि) D3 एषा, D4 S (except T1) तेषा (for चैषा) — $^{c}$) K4 5 B (except B1) Dn1 n2 D3. 7–11 प्रेक्ष्यमाणा(D3 10 °ना)स् (for प्रेक्ष°) T2 3 तथा, T4 तु ते (for तदा) — $^{d}$) K4 5 B2 Dn2 n3 D6 8–11 अधावन्, B5 corrupt, D2 7 बांधवान्, D4 आगतान्, T1 3 G M प्राद्रवन्, T4 प्रययुर् (for आ धावन्)

75 $^{a}$) B Dn D3 6 8–11 T M तथा (for तदा) — $^{b}$) K2 4 5 D2 M2–4 विद्रावे, Dn D1. 7 (marg) T1 3 विप्लवे, D3 7 (orig) विद्रुते, T2 [ऽ]भिप्लवे (for विद्रवे) — $^{c}$) Dn D5 7 M2 संतप्त (for समूढ)

76 $^{a}$) D2 T4 G1 ततो, D5 यतो, T2 जिते (for जितो) T4 G2 3 M संख्ये — $^{e}$) D2 हतोथ (for हताश्च) K5 (marg) कौरवा (for कुरव°) B5 संख्ये (for सर्वे) — $^{f}$) K4 5 T4 पुरोगमा°, D6 -पुरस्कृता (for पुर°सरा)

77 $^{a}$) B1 D1 9 T1 2 G1 3 M विमुक्तश्च; T3 4 G2 °को हि (for °क्तस्तु). — $^{b}$) D5 -योग- (for -योगाद्).

विद्रुतानि च सर्वाणि शिबिराणि समन्ततः ॥ ७७
दुर्योधनस्य सचिवा ये केचिदवशेषिताः ।
राजदारानुपादाय व्यधावन्नगरं प्रति ॥ ७८
प्राप्तकालमहं मन्ये प्रवेशं तैः सहाभिभो ।
युधिष्ठिरमनुज्ञाप्य भीमसेनं तथैव च ॥ ७९
एतमर्थं महाबाहुरुभयोः स न्यवेदयत् ।
तस्य प्रीतोऽभवद्राजा नित्यं करुणवेदिता ।
परिष्वज्य महाबाहुर्वैश्यापुत्रं व्यसर्जयत् ॥ ८०
ततः स रथमास्थाय द्रुतमश्वानचोदयत् ।
असंभावितवांश्चापि राजदारान्पुरं प्रति ॥ ८१
तैश्चैव सहितः क्षिप्रमस्तं गच्छति भास्करे ।
प्रविष्टो हास्तिनपुरं बाष्पकण्ठोऽश्रुलोचनः ॥ ८२
अपश्यत महाप्राज्ञं विदुरं साश्रुलोचनम् ।
राज्ञः समीपान्निष्क्रान्तं शोकोपहतचेतसम् ॥ ८३

C 9 1635
B 9 29 69
K. 9 29 77

— $^{c}$) D4 निद्रुतानि (for विद्रु°) D4 S (except T1 2) सैन्यानि (for सर्वाणि) — $^{d}$) Ś1 K1 शिविराणि, S (except T1 2) शिविराद्दै (for °राणि) — After 77, K4 5 B Dn D$^{n}$ 2. 7-9 11 ins

174* इतस्ततः पलायन्ते हतनाथा हतौजसः ।
अदृष्टपूर्वा दुःखार्ता भयव्याकुललोचना ।
हरिणा इव वित्रस्ता प्रेक्षमाणा दिशो दश ।

[ (L 1) D2 5 7 पलायन्तो D2 3 7 -नागा (for -नाथा) — K4 5 om lines 2-3 — (L 2) Dn D2 5 7 -पूर्वं- (for -पूर्वा) D2 -व्याकुलनेत्रा — (L 3) Dn D2. 5 7 विस्रष्टा (for वित्रस्ता) B1 3 4 D5 प्रेक्षमाणा, D11 वीक्ष° (for प्रेक्ष°) ]

78 $^{a}$) G1 3 सहसा (for सचिवा) — $^{b}$) T2 एके च दशवर्षिता (sic) — $^{d}$) K8 निधावन्, D1 3 6 10 11 प्रय(D1 ते य)युर्, D2 व्यद्रवन्, D4 तेधावन्, S (except T1 2) ते यान्ति (for व्यधावन्)

79 D1 om. 79$^{ab}$ — $^{a}$) D2 प्राप्तकालम् D4 ज्ञात्वा (for मन्ये) — $^{b}$) Dn1 corrupt D3 प्रवेशस्, D4 प्रविष्ट, D7 प्रविश (for प्रवेश) Ś1 K1-3 सहाभित, K4 5 B D3 8-10 सह प्रभो, T3 सहायिभि, G2 सहापि वा, M सम विभो (for सहाभिभो) D5 प्रवेशस्त्वंमहा-विभो — $^{c}$) K3. 4 5 Dn D1 3 5 7 8 10 11 अनुज्ञाय, D6 T1 2 4 M8 °प्राप्य (for °ज्ञाप्य) — $^{d}$) T3 G M वासुदेवं (for भीमसेनं) G1 [अ]भिभो, G2 विभो (for [ए]व च)

80 $^{a}$) K2 T1 2 एवम्, K4 5 एनम्, B (except B3) D1 7-10 T3 4 G M2 एतद् (for एतम्) K2 दक्ष, D1 सर्वं, T1 2 एतन् (for अर्थं) K4 5 महा-बाहो, T3 4 G °राज, M2 4 °बाहोर् (for °बाहुर्) — $^{b}$) K4 5 Dn3 संनि(Dn3 °न्य)वेदयत्, B1 G2 स न्यवे दयत्, D8 समवेदयत्, T3 तु न्यवे°, T4 तस्य वे°, G1 तत्रयवे°, M8 त न्यवे° (for स न्यवे°) — $^{c}$) K4 5 भीतो (for प्रीतो) D9 10 भवेद् (for ऽभवद्) — $^{d}$) D5 7 T G वेदिन (for °ता) — $^{e}$) Dn1 परिपूज्य (for °ष्वज्य) K3 B1 2 G2 महाबाहु, T3. 4 G1 3 °राज (for बाहुर्) — $^{f}$) K1 B3. 5 D1. 7 T2 4 G M3 वेश्यापुत्र, D9 T3 वैश्य° (for वैश्या°) K8 D4 विमर्जयत्

81 B. om (hapl) 81$^{ab}$ — $^{a}$) K4 च, K5 B1 3 Dn D3-5 7-9 स्व (for स) — $^{b}$) T3 G M तूर्णम् (for द्रुतम्) K4 5 Dn D1 2 5-7 अनोदयत् — $^{c}$) K4 5 Dn D2 5 7 10 स (D2 न) समावितवांश्चापि (Dn1 °वक्त्राश्च, Dn2 n3 °वांश्चैव), B D8 11 सवाह-यित°, D1 6 समावयित°, D3. 4 समवापित°, D9 स चाहयित, T1 स प्रापयित्वा तांश्चापि, T2 संभावयित्वा तां चापि, T3 सम्प्राप्य इतरांश्चापि, T4 G सम्प्रापयितवांश्चापि, M राजदारानुपादाय — $^{d}$) M शीघ्रं गच्छन् (for राज दारान्)

82 D1 om 82$^{ab}$ — $^{a}$) B4. 5 T3 तैश्च (for चैव) T4 सहित B1 3 तैश्च समाहित (B1 °महितै) क्षिप्रम्, D9 तैश्च सतहितै क्षिप्रम् — $^{c}$) Some MSS हस्तिनपुर — $^{d}$) G1 3 अस्र (for बाष्प) B5 D9 -कठाश्रु-, G3 -कठोरु, M -कठास्र (for -कण्ठोऽश्रु-) K8 -लोचन

83 K8 T3. 4 om (hapl) 83$^{ab}$ — $^{a}$) D1 G M8 अप-श्यच्च, D3 °श्यत्स (for °श्यत) K4 5 D7 10 महाप्राज्ञो, B1 5 D6 9 °प्रज्ञं (for °प्राज्ञं) — $^{b}$) D8 सोश्रु-, M सास्र (for साश्रु) K4 5 D7 G2 विदुर साश्रुलोचन (G2 °न) — $^{c}$) T4 समीप (for समीपान्) D4. 9 नि श्रात — $^{d}$) Dn1 शोकापहत-, D4 समोपहत; D9 शोकोपहत (for °हत) K4. 5 Dn D5 6 T1. 2 -चेतनं; D3 7 -चेतन, D8 -चेतस (for °सम्)

84 $^{a}$) K5 सत्यवृति, D1 सतां वृत्ति (for सत्यधृति) — $^{b}$) Dn च (for तु) T G प्रणयादभत स्थितं; M

C 1 1154 B 9 21 69 K 9 21 74

तमब्रवीत्सत्यधृतिः प्रणतं त्वग्रतः स्थितम् ।
अस्मिन्कुरुक्षये वृत्ते दिष्ट्या त्वं पुत्र जीवसि ॥ ८४
विना राज्ञः प्रवेशाद्वै किमसि त्वमिहागतः ।
एतन्मे कारणं सर्वं विस्तरेण निवेदय ॥ ८५

युयुत्सुरुवाच ।

निहते शकुनौ तात सज्ञातिसुतबान्धवे ।
हतशेषपरीवारो राजा दुर्योधनस्ततः ।
स्वकं स हयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात् ॥ ८६
अपक्रान्ते तु नृपतौ स्कन्धावारनिवेशनात् ।
भयव्याकुलितं सर्वं प्राद्रवन्नगरं प्रति ॥ ८७
ततो राज्ञः कलत्राणि भ्रातॄणां चास्य सर्वशः ।
वाहनेषु समारोप्य स्त्र्यध्यक्षाः प्राद्रवन्भयात् ॥ ८८
ततोऽहं समनुज्ञाप्य राजानं सहकेशवम् ।
प्रविष्टो हास्तिनपुरं रक्षँल्लोकाद्धि वाच्यताम् ॥ ८९
एतच्छ्रुत्वा तु वचनं वैश्यापुत्रेण भाषितम् ।
प्राप्तकालमिति ज्ञात्वा विदुरः सर्वधर्मवित् ।
अपूजयदमेयात्मा युयुत्सुं वाक्यकोविदम् ॥ ९०
प्राप्तकालमिदं सर्वं भवतो भरतक्षये ।

---

प्रभॉम्नम्याप्र° — Before 84$^{c}$, G3 ins विदुर —$^{c}$) D3 10 11 दिष्ट्या, G1 3 M तस्मिन् (for अस्मिन्) K2 3 कुर, G2 3 पत्र (for कुर) D8 9 -भये (for क्षये) —$^{d}$) K1 2 दृष्ट्या, D3 10 11 अस्मिन् (for दिष्ट्या)

85 $^{a}$) D3 रान (for राज्ञ) D1 प्रवेश (for °शाद्) —$^{b}$) Ś1 K1 2 किमपि, D1 °पं (for °मि) K2 [अ]प्रत (for [आ]गत) —$^{c}$) Ś1 K D1 3 6 T1 2 वै (for मे) —$^{d}$) D1 विस्तरान्मे (for °रेण) — After 85, Ś1 K1-3 ins an addl. colophon

86 $^{a}$) D1 3 8 10 11 G3 तत्र (for तात) —$^{b}$) K3 स्व (for स) D1 ससुते च सबान्धवे —$^{c}$) K3 D3 9 हतशेष (for हत°) B1 Dn D1 2 -परिवारो (for परी°) —$^{d}$) K2 स्थित ; B2 4 5 सदा, Dn तथ, G3 तथा (for तत) —$^{e}$) Dn D2 4 5 7 हत (D7 °त) (for स्वक) K2 4 5 सहायम, Dn D1 2 4 6 7 स्वहयम् (for स हयम्) S स्वकं (T3 G1 °य) हय (G रथ) समुत्सृज्य —$^{f}$) M2 4 transp प्राङ्मुख and प्राद्रवत् M1 प्राङ्मुख

87 $^{b}$) Ś1 K1 2 स्कन्दावार, T2 स्कधचारान् (for स्कन्धावार) Ś1 K (except K2) D1 2 6 निवेशन, Dn निवापि यत् (for निवेशनात्) —$^{c}$) D2 व्याकुलितं D1 S (except T1 4) सैन्यं (for सर्वं)

88 $^{a}$) D2 T2 3 M कलत्राणि —$^{b}$) D3 [ए]व, T [अ]पि (for [अ]स्य) K3 B1 2 Dn D3-11 T1 G3 सर्वश, T4 भारत, G1 संजय (for सर्वशः) —$^{c}$) D1 यानान्यर्व, D3 6 याहान्यर्गान (D3 °र्य) (for वाहनेषु) —$^{d}$) K2 4 5 B2 4 Dn D2-7 10 11 T1 G1 2 अध्यक्षा, T3 4 G2 ह°, M1 र्वारक्षा (for स्त्र्यध्यक्षा)

89 $^{a}$) B1 D2 5 (*sup lin* as in text) G2 M3 समनुप्राप्य (for °ज्ञाप्य) —$^{b}$) D4 राजान केशव तथा —$^{c}$) Some MSS हास्तिनपुर —$^{d}$) G3 रक्ष्य (for रक्षँल्) D1 2 6 7 S लोकस्य (for लोकाद्धि) Ś1 K2 वाश्य(K2 °श)तां, D2 चाच्युतान्, G3 याचिता (for वाच्यताम्) K4 5 रक्षँल्लोकाद्धिना(K5 °द्धि भा)च्युतात्; B D3 9 11 °कान्प्रधावितान्, Dn पुरलोकस्य वाच्य तत् (sic), D8 रणलोकार्जित यश, D4 रक्षँल्लोकाद्यवहित, D6 °दिव च्युत, D10 °द्विवात्मना

90 Before 90, T1 G1 ins संजय उवाच —$^{a}$) T3 ज्ञात्वा (for श्रुत्वा) Dn च (for तु) — T3 4 om. (hapl) 90$^{b}$–92$^{a}$ G M2-4 transp 90$^{b}$ and 90$^{d}$ —$^{b}$) Ś1 D4 G वेश्यापुत्रेण, B5 D3 9 वैश्य° (for वैश्या°) — M1 om 90$^{cd}$ —$^{c}$) G काल प्राप्त (for प्राप्त कालम्) K2 ज्ञाता, T2 प्राज्ञो (for ज्ञात्वा) —$^{d}$) G2 सत्य (for सर्व) —$^{e}$) G2 अनुपूज्यद् (for अपूजयद्) D3 7 विदुरश्चैव धर्मात्मा —$^{f}$) T2 धर्मं (for वाक्य) Ś1 K Dn D1-3 6-7 10 11 युयुत्सुं वाक्यमब्रवीत् — After 90, Dn1 n2 D6 ins 175*

91 T3 4 om 91 (cf v 1 90) Dn1 n2 D3 om 91$^{ab}$ T1 2 om. 91$^{a}$–92$^{b}$ Dn3 reads 91$^{ab}$ on marg —$^{b}$) K3 D9 युवता (D9 °तो), Dn3 D8 M भवता, D4 कृतं ते, D8 श्रुत्वा ते (for भवतो) Ś1 K1-3 M3 भरतर्षभ (for °क्षये) D10 भवते भारतक्षय — Ś1 K Dn3 D1-5 7-11 ins after 91$^{b}$ Dn1, n2 D6 after 90

175* संस्मृत कुलधर्मश्च सानुक्रोशतया त्वया ।
दिष्ट्या त्वा तात संग्रामादस्माद्वीरक्षयात्पुरम् ।
समागतमपश्याम अंशुमन्तमिव प्रजा ।
अन्धस्य नृपतेर्यष्टिर्लुब्धस्यादीर्घदर्शिन ।

अद्य त्वमिह विश्रान्तः श्वोऽभिगन्ता युधिष्ठिरम् ॥ ९१
एतावदुक्त्वा वचनं विदुरः सर्वधर्मवित् ।
युयुत्सुं समनुज्ञाप्य प्रविवेश नृपक्षयम् ।
युयुत्सुरपि तां रात्रिं स्वगृहे न्यवसत्तदा ॥ ९२ C 9 1671 B 9 19 105 K 9 29 91

इति श्रीमहाभारते शल्यपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ समाप्तं ह्रदप्रवेशपर्व ॥

बहुशो याच्यमानस्य दैवोपहतचेतस ।
त्वमेको व्यसनार्तस्य ध्रियसे पुत्र सर्वदा ।

[ Dn1 n2 D6 om. lines 1–3, Dn3 reads them on marg —(L 1) K4. 5 D4 सरनृत्य, Dn3 सहृत, D1 10 स स्मृत, D3 मस्मृत, Bom ed रक्षित (for मस्मृत) K4 5 Dn3 D3 धर्म (for -धर्मज्ञ) K4 धिया (for त्वया) —(L 2) K4 दृष्ट्वा (for दिष्ट्या) Ś1 K1 2 Dn3 D9 10 त्व (for त्वा) K3 D8 10 11 इह (for तान) K2 D4 पर, K4. 5 पुरा, D8 पुन (for पुरम्) —(L 3) D2 4 अपश्यानो Dn3 D2 7 10 अशुमतम्, D4 हत सुतम्, D8 शमसतन् (for हंशुमन्तन्) —(L 4) D5 दृष्टिर्, D9 पार्ष्णिर् (for यष्टिर्) D9 लब्धस्य (for लु°) D4 -दर्शिनीं, D5 -दर्शन —D11 om lines 5–6 —(L 5) D1 शुचमानस्य, D3. 10 वाच्य° (for याच्य°) —(L 6) K2 व्यसनाचस्य, D9 विवशस्तस्य (for व्यसनार्तस्य) D1 corrupt for the post half D1 जायसे, D2 प्रीयसे, D3 जीवसे (for ध्रियसे) Ś1 K1 3 D1. 6 10 सर्वथा, K2 D3 8 9 °दा (for °दा) ]

—ᵃ) G M1 [अ]हमपि (M1 °भि) (for त्वमिह) —ᶠ) M1 च (for श्वो) B1 D9 गतासि, D1 हि गता, D8 [ऽ]तिगता, D2 गतोसि, G गतास्मि, M1 [अ]स्मि गंता, M2–4 [ऽ]भिगच्छ (for गन्ता) K1 जनाधिप (for युधिष्ठिरम्)

92 T3 4 om. 92ᵃ (cf v l 90) T1 2 om. 92ᵃᵇ (cf v l 91) Before 92, D4 ins वैशंपायन उवाच —ᵇ) G2 सत्य- (for सर्व-) Ś1 K D (except D4 8 9) विदुर साश्रुलोचन — After 92ᵇ, Dn D5 7 ins

176* युयुत्सु प्रेषयामास स्वगृहं याहि पुत्रक ।
युयुत्सुरपि क्षत्तारं नत्वा स्वगृहमाययौ ।

[ (L 1) Dn3 तोषयामास (for प्रेष) ]

—ᶜ) Dn2 युयुत्सु· D6 11 G3 (after corr as in text) -प्राप्य (for -ज्ञाप्य) —ᵈ) D6 om from नृपक्षयम् up to दृष्ट्वा ध्वस्त (in line 3 of 177*) D1 नृपालय (for नृपक्षयम्) S (except T4) विवेश नृपतिक्ष (T1–3 °ते क्ष )यं — After 92ᵈ, Ś1 K D T1 2 ins

177* पौरजानपदैर्दुःखाद्धा हेति भृशनादितम् ।
निरानन्दं गतश्रीकं हतनागमिवाशयम् ।
शून्यरूपमपध्वस्तं दृष्ट्वा ध्वस्ततरोऽभवत् ।
विदुर सर्वधर्मज्ञो विक्लवेनान्तरात्मना ।
विवेश नृपते राजन्निशश्वास शनैः शनैः ।

[ D6 om up to दृष्ट्वा ध्वस्त (in line 3) Before line 1, K4 reads line 3 for the first time, repeating it in its proper place K5 transp lines 1 and 3 —(L 1) D1 गत्वा (for दुःखाद्) D2 -नादिते —(L 2) D1 च नि श्रीक (for गत°) Ś1 K1 8 D11 हतारामम्, D2–4 हतनागम् (for हत ) K2 4 5 D2 आश्रय (for आशयम्) D1 हतांकुमिव सागर, D5 9 हतनाथ नृपाशय (for the post half) — D1 om line 3, K4 reads it for the first time before line 1 —(L 3) Dn D2 5 7 शून्यद्वारम् (for रूपम्) K4 (both times) 5 महाध्वस्त, D4 T1 अव°, D5 corrupt (for अप°) Ś1 K1 2 शून्य नृपगृह (Ś1 lacuna for गृह) ध्वस्त (for the prior half) K3 D3 11 T1 दुःखाद्दुःखतरोऽभवत्, Dn D2 5 7 कु(Dn3 क)टनाग सरो यथा (for the post. half) — D8 om. lines 4–5 —(L 4) Dn D5 7 धर्मात्मा (for -धर्मज्ञो) Dn विविक्तेन, T2 व्याकुलेन (for विक्लवेन) —(L 5) The portion of the text from नृपते up to तत· प्रा (in 9. 29 53ᵃ) is lost

in D5 on missing folios D6 11 नगरे, D7 स्वगृह (for नृपते) Ś1 K1 आरात्; Dn वेदम, D1 4 पार्श्व (for राजन्) Dn नि श्वमन्न, D1 2 4 7 निश्वमश्च (for निश्श्वास) ]

—After 177*, D8 ins line 2 of 178* G1 8 om 92ef —f) D4 न्यपतत्, D8 न्यविशत्, T2 निवसत् (for न्य°) T3 4 G2 M न्यवस(M8 °विश)त्स्वगृहे सदा — After 92, Ś1 K D (except D8, D5 missing) T1 2 ins

178* वन्द्यमान स्वकैश्चापि नाम्यनन्दत्सुदु:खित ।
चिन्तयान क्षय तीव्र भरतानां परस्परम् ।

[D1 om line 1 —(L 1) Ś1 K2 D8 9 नद्य(K2 °द)मान, K1 नर्दमान, Dn1 वीक्षमाण, Dn2 n8 D2 वक्ष्यमाण, T1 2 वत्स्यमान' (for वन्द्य°) —(L 2) D2 धिग्धिक्क्षत्र, D7 धिग्धिग्यन् (submetric) (for चिन्तयान) D1 पर तीव्र, T1.2 महाराज (for क्षय तीव्र) Dn धिक्कारयन्नय तीव्र (for the prior half) K2 4 5 भारतानां, T1 2 हतानां च (for भरतानां) D1 क्षय तदा, D2 पितामह (for परस्परम्) ]

Colophon D5 missing —*Adhy name* Ś1 K1–3 D1.4 दुर्योधनापसरण (K2 °सर, D1 4 °सरण), K4 5 D6 ह्रदोपयाने दुर्योधनापसरण (D6 °ण), D8 शल्यवध; D7 दुर्योधनस्य ह्रदेपसर्पण, M2–4 ह्रदप्रवेश —*Adhy no* (figures, words or both) B5 29, Dn 27, D4 28 (as in text), Dn S 30 —*Śloka no* K5 97, Dn 99

— After the above colophon, K8 B3 4 add समाप्तं चेद (B3 इदं, B4 च) शल्यपर्व, K4 5 B1 2 D2 4 7–9 शल्यपर्व समाप्तं, B5 समाप्त, D1 शल्यपर्व सपूर्णं, D3 समाप्तोऽय ग्रंथ सपूर्ण

K4 concludes with

अत पर गदापर्व भविष्यति । तस्यायमाद्य श्लोक ।

धृतराष्ट्र उवाच ।
हतेषु सर्वसैन्येषु पाण्डुपुत्रै रणाजिरे ।
मम सैन्यावशिष्टास्ते किमकुर्वत सजय ॥

संवत् १८५१ शाके १७१६ मार्गशिर शुक्ला ६ भृगुवासरे लिखित ।

K5 concludes with .

शुभमस्तु । अत पर गदापर्व भविष्यति । ॐ नमो भगवते वासुदेवाय नम ।

B1 concludes with

नारायण नमस्कृत्येत्यादि ।

D1 concludes with

स्वस्ति श्री संवत् १६४९ वर्षे शके १५१४ प्रवर्तमाने श्रावण शुदि ६ गुरौ लिखिते अद्येह श्रीसूर्यपुरे तापीतटे वास्तव्य आभ्यंतरनागरज्ञातीय दुवे श्रीवामनसुतवोधाकेन लिखितं ।

यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयताम् ॥
भग्नपृष्ठकटिग्रीवायद्धमुष्टिरधोमुखम् ।
कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत् ॥

शुभ भवतु । शिवमस्तु । गणेशादशपुत्रस्येदं पुस्तकं ।

D5 concludes with

राम । राम । शुभमस्तु । राम । राम । श्रीदुर्गाशह ।

D9 concludes with

श्रीकृष्णार्पणमस्तु । श्री । श्री । शुभमस्तु ।
मार्गशीर्षे कृष्णपक्षे एकादश्यार्कवासरात् ।
राजेश्वरेण लिखिता समाप्तं शल्यपर्वणि ॥ १ ॥

D10 concludes with

अत' पर गदायुद्धपर्व । शुभमस्तु । नृसिंह ।

लिपितमिदमद्भुत पुस्तकं भारताख्यं
दुरितनिचयघ्नन्तं भर्त्सन दुर्मतेश्च ।
द्विनवपदसमेतैरङ्कभिश्चैव सैकै-
र्गतवति सति वर्षे गङ्गरामेण दिव्यम् ॥

संवत् १८१२ गुरुवासरे शल्यपर्वणि समाप्त' ।

D11 concludes with

श्रीकृष्णार्पणमस्तु ।

# २९

धृतराष्ट्र उवाच ।
हतेषु सर्वसैन्येषु पाण्डुपुत्रै रणाजिरे ।
मम सैन्यावशिष्टास्ते किमकुर्वत संजय ॥ १
कृतवर्मा कृपश्चैव द्रोणपुत्रश्च वीर्यवान् ।
दुर्योधनश्च मन्दात्मा राजा किमकरोत्तदा ॥ २
संजय उवाच ।
संप्राद्रवत्सु दारेषु क्षत्रियाणां महात्मनाम् ।
विद्रुते शिबिरे शून्ये भृशोद्विग्नास्त्रयो रथाः ॥ ३
निशम्य पाण्डुपुत्राणां तदा विजयिनां स्वनम् ।
विद्रुतं शिबिरं दृष्ट्वा सायाह्ने राजगृद्धिनः ।
स्थानं नारोचयंस्तत्र ततस्ते ह्रदमभ्ययुः ॥ ४
युधिष्ठिरोऽपि धर्मात्मा भ्रातृभिः सहितो रणे ।
हृष्टः पर्यपतद्राजन्दुर्योधनवधेप्सया ॥ ५
मार्गमाणास्तु संक्रुद्धास्तव पुत्रं जयैषिणः ।

C 9 1673
B 9 30 6
K 9 30 8

## 29

The introductory mantra

179* नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ।

is found only in K2 B1 2 Dn D2 6–10 D6 10 read व्यास for चैव in the second line

Before the introductory mantra, K2 ins ॐ श्रीगणेशाय नमः, B1 D6 7 9.10 श्रीगणेशाय नमः, Dn1 श्रीगणेशाय नमः । ॐ नमः श्रीगुरुगोपालगौरीगणपतिभ्यः, D2 ॐ नमो भगवते व्यासाय, D8 श्रीगणेशाय नमः । ॐ नमो भगवते वासुदेवाय — S (except T1. 2), on the other hand, ins before 1

180* संजय उवाच ।
मुहूर्तादिव राजेन्द्र सर्वं शून्यमदृश्यत ।
मत्तवारणसंघुष्टं शिबिरं विद्रुते बले ।
यत्र शब्देन महता नान्वबुध्यन्महारथाः ।
तत्र शब्दं न शृणुमो मनुष्यस्यापि कस्यचित् ।

[ (L. 1) G2 नवसैन्यम् (for सर्वं शून्यम्) T3 अनृत (sic), T4 अमन्यत (for अदृश्यत) — (L 2) T8 -मन्नद्द (for संघुष्ट) M8 शिबिरे — G1 8 om line 3 — (L. 3) T3 4 G2 ना(T4 अ)बुध्यत, M2.4 नावबुध्यन् (for नान्व°) ]

☞ Owing to the missing folios, the portion of the text from the beginning up to 9 60 34[a] is lost in Ś1 T5 begins from 9 55 1

1 Owing to the missing first folios, the portion of the text from the beginning up to 48[b] is lost in D4, up to तत प्रा (in 53[a]) in D5, and up to आगम्य तु त (in 37[c]) in D11 —[a]) T G2 तेषु (for सर्व) T8 शस्त्रेषु, M1 3.4 यौ(M1 -यो)धेषु (for सैन्येषु) —[c]) D2 M1 सैन्येवशिष्टास् T G मामका ह्यवशिष्टास्त —[d]) Dn1 D2 T3 G2 M अकुर्वत

2 D4 5 11 missing (cf v 1 1) —[a]) K2 3 T2 कृपश्च कृतवर्मा च —[c]) B1 D7–9 तु, T3 स (for च) D6 धर्मात्मा (for मन्दात्मा) —[d]) M1 2 4 किमकुर्वत परं

3 D4 5 11 missing (cf v 1 1) T3 om the ref —[a]) K4 G1 M3 संप्रद्रवत्सु, B3 संप्राद्रवत्सु च (hypermetric) —[b]) M1 2 4 ततस्तत, M3 समतत (for महात्मनाम्) —[c]) D. सैन्ये (for शून्ये) —[d]) T1–3 G3 भयोद्विग्नास् (for भृशो°)

4 D4 5 11 missing (cf v 1 1) —[b]) B1 D7 7–9 वै (for वि) K1 स्वर, D6 वल (for स्वनम्) T G जयि(T3 वलि)ना सुमहास्वनं, M नदंता च महास्वन —[c]) M1. 2 4 दृष्ट्वा तु शिबिर शून्य —[d]) T4 मध्याह्ने (for सायाह्ने) T3 M जय-, G1 (also as in text) 3 सम (for राज) Ś1 K1 -गृद्धिण, Dn2 -गृर्द्धिन, T1 गार्धिन, G1 3 -गाधिन (for गृद्धिन) —[e]) D1 M3 स्थातुं, M1 2 4 स्थितिं (for स्थानं) —[f]) T1–3 G1 3 M2–4 त, G2 तु (for ते) D1. 6 अन्वयु (for अभ्ययु)

5 D4. 5 11 missing (cf. v 1 1) —[a]) K2 om ऽपि B2 S कौंतेयो (for धर्मात्मा) —[c]) Ś1 K1–3 हृष्टै K4 B Dn D6–10 T4 पर्य(Dn °र्या)चरद्, D2 °चरन् (for °पतद्) D3 राजा —[d]) K3 सुयोधन

6 D4 5 11 missing (cf v 1 1) T3 4 om (hapl) 6–7 —[a]) D3 संक्रोधास् (for संक्रुद्धास्) —[b]) Ś1 K1 3 पुत्र, K2 पुत्रे, Dn पुत्रा (for पुत्रं) B3. 4 प्रियै

C 9 2184 B 9 39 9 K 9 40 8

मुक्तः कथं चास्य शिरो लग्नं केन च हेतुना ॥ ८

वैशंपायन उवाच ।

पुरा वै दण्डकारण्ये राघवेण महात्मना ।
वसता राजशार्दूल राक्षसास्तत्र हिंसिताः ॥ ९
जनस्थाने शिरश्छिन्नं राक्षसस्य दुरात्मनः ।
क्षुरेण शितधारेण तत्पपात महावने ॥ १०
महोदरस्य तल्लग्नं जङ्घायां वै यदृच्छया ।
वने विचरतो राजन्नस्थि भित्त्वास्फुरत्तदा ॥ ११
स तेन लग्नेन तदा द्विजातिर्न शशाक ह ।
अभिगन्तुं महाप्राज्ञस्तीर्थान्यायतनानि च ॥ १२
स पूतिना विस्रवता वेदनार्तो महामुनिः ।
जगाम सर्वतीर्थानि पृथिव्यामिति नः श्रुतम् ॥ १३
स गत्वा सरितः सर्वाः समुद्रांश्च महातपाः ।
कथयामास तत्सर्वमृषीणां भावितात्मनाम् ॥ १४
आप्लुतः सर्वतीर्थेषु न च मोक्षमवाप्तवान् ।
स तु शुश्राव विप्रेन्द्रो मुनीनां वचनं महत् ॥ १५
सरस्वत्यास्तीर्थवरं ख्यातमौशनसं तदा ।
सर्वपापप्रशमनं सिद्धक्षेत्रमनुत्तमम् ॥ १६
स तु गत्वा ततस्तत्र तीर्थमौशनसं द्विजः ।
तत औशनसे तीर्थे तस्योपस्पृशतस्तदा ।

---

(before 9) K4 om (hapl) 8 and the following ref T3 damaged for $8^{ab}$ — a) D2 3 11 पुण्य, G2 यत्र (for ब्रह्मन्) — b) T1 2 प्रासो, G2 विप्र (for यत्र) — cd) D6 8 T3 G2 8 M1 मुक्त (for मुक्त) B2 वा (for च) K2 लग्न, D1 भग्न (for लग्न) T1 2 कथं चास्य शिरो लग्नं केन चैव तु हेतुना

9 K3 4 om the ref (cf v l 8) — b) Ś1 K1 राघवेन — d) B Dn D1 4–10 राक्षसान्दा(D4 °न्ता)मयिप्यता, M1 2 4 °सास्तत्र हिंसता

10 a) T3 damaged from जनस्थाने up to राजन्नस्थि (in $11^{cd}$) — b) K4 D2 T4 G महात्मन (T4 G2 °ना) (for दुरा°) — c) T2 शरेण (for क्षुरेण) K1 D6 11 शत, D3 शर, G1 सित- (for शित) — d) K2 4 B D2 3 6–7 9 11 तत्पपात, D8 तत्प्रयाय (for तत्पपात) D7 9 महात्मन

11 T3 damaged up to राजन्नस्थि — a) Ś1 K1 सहोदरस्य, K4 B5 रहो° (for महो°) K2 3 वै (for तल्.) — b) K2 3 तद् (for वै) — c) Dn1 D2 4–6 8 10 विचरता (for °तो) — d) Dn स्थित्वा (for अस्थि) T1 भूत्वा (for भित्त्वा) D2 4 शिरस्, D11 [आ]विशत्, T2 पुरत् (sic), Cn [अ]स्फुरत् (as in text)

12 c) B4 अतिगंतु, T1 अभिगंतुर् (for °गन्तु) Ś1 K1 तदा (for महा) D1 4 5 8 -भाग; D11 S (except T4 G1) प्राज्ञ (for प्राज्ञस्)

13 a) D5 पूजिता (for पूतिना) K4 D1–3 5 11 विश्रवता, B6 प्रस्र° (for विस्र°). ❀ Cv (reading सपूतिना) सपूतिना दुर्गन्धमलिनेन । c — d) T3 damaged from पृथिव्या up to मृषीणा (in $14^{d}$) K4 B Dn D1 4–10 चेति (for इति) K3 नाश्रुत, T1 2 विश्रुत (for नः श्रुतम्)

14 T3 damaged up to मृषीणा — b) T4 सरामि च (for महातपा) — $14^{cd}$–$19^{cd}$ — d) K2 3 मुनीनां (for ऋषीणां)

15 Ś1 K1–3 om (hapl) 15–19 T3 damaged up to न च — a) B1 Dn1 D2 6 11 T1 आप्लुत्य, M2–4 मोक्षुत (for आ°) — b) Dn D2 7 9 10 अवाप्नुयात् (for °सवान्) — c) Dn D1 सुश्रा(D1 °स्रा)व K4 विप्रर्षिर्, B2 D4 6 8–10 विप्रेंद्र, D2 3 11 राजेंद्र, T2 damaged (for विप्रेन्द्रो) — d) D2 11 वचनात् (for वचन) D3 तदा (for महत्) D1 4 6 मुनीना भावितात्मना (cf $14^{d}$), D10 मुनिनोक्त वचो महत्

16 Ś1 K1–3 om 16 (cf v l 15) — a) Dn T2–4 G M1 2 सरस्वत्या T2 4 G तु सत्तीर्थं (for तीर्थवर) — b) M1 औशनसस् (sic) B1 Dn T4 M3 तथा, D2 7 सदा (for तदा) — D1 repeats $16^{cd}$ after $17^{d}$ T3 damaged for $16^{c}$–$17^{d}$ — d) K4 तादि; B2 विद्ध; B5 D3 10 G3 M1 2 4 सिद्धि (for सिद्ध-)

17 Ś1 K1–3 om 17 (cf v l 15) T3 damaged for $17^{abcd}$ — a) B2 च गत्वा, D1 सत्वा तु, D2 3 11 जगाम (for तु गत्वा) B3 4 तीर्थं, B6 तत्तु (for तत्र) — b) B3 4 ख्यातम् (for तीर्थम्) D3 युज- (sic), G1 3 तत (for द्विज-) — c) G1 3 तस्य (for तत) D1 स्वौशनसे, D3 T4 G M चौश° (for औश°) T1 2

C 9 2274 B 9 39 29 K 9 40 29 देहन्यासे कृतमना विचिन्त्य बहुधा बहु ॥ २४
ततः सर्वानुपादाय तनयान्वै महातपाः ।
रुषङ्गुरब्रवीत्तत्र नयध्वं मा पृथूदकम् ॥ २५
विज्ञायातीतवयसं रुषङ्गुं ते तपोधनाः ।
तं वै तीर्थमुपानिन्युः सरस्वत्यास्तपोधनम् ॥ २६
स तैः पुत्रैस्तदा धीमानानीतो वै सरस्वतीम् ।
पुण्यां तीर्थशतोपेतां विप्रसंघैर्निषेविताम् ॥ २७
स तत्र विधिना राजन्नाप्लुतः सुमहातपाः ।
ज्ञात्वा तीर्थगुणांश्चैव प्राहेदमृषिसत्तमः ।
सुप्रीतः पुरुषव्याघ्र सर्वान्पुत्रानुपासतः ॥ २८
सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम् ।
पृथूदके जप्यपरो नैनं श्वोमरणं तपेत् ॥ २९
तत्राप्लुत्य स धर्मात्मा उपस्पृश्य हलायुधः ।
दत्त्वा चैव बहून्दायान्विप्राणां विप्रवत्सलः ॥ ३०
ससर्ज यत्र भगवाँल्लोकाँल्लोकपितामहः ।
यत्रार्ष्टिषेणः कौरव्य ब्राह्मण्यं संशितव्रतः ।
तपसा महता राजन्प्राप्तवानृषिसत्तमः ॥ ३१
सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः ।

24 a) Ś1 D5 रुपंगो (D5 °गोर्), K1 8 Dn रुप ङ्गुर्, K2 रुपग्लुर्, T1 2 4 G M उशंगुर्, T8 उश ङ्कुर् (for रुषङ्गुर्) D2 राजस् (for बृन्दस्) — b) K4 D1 -चृन्दश्च, Dn विश्रश्च, D6 निश्चश्च, D8 निश्चित्य (for नित्यश्च) — T8 damaged for $24^{c}$–$25^{b}$ — c) D1 धृत (for कृत-) — d) B Dn D1 4-10 तदा, T1 2 4 G M1 नृप (for बहु)

25 T8 damaged for $25^{ab}$ — a) G2 समादाय (for उपा°) — K4 om (hapl) $25^{c}$–$28^{b}$ — c) Ś1 K1 8 Dn रुपङ्गुर्, K2 ह्रपङ्गुर्, T1 2 4 G M उशगुर्, T8 उशङ्कुर् (for रुषङ्कुर्) — d) K2 8 B D T G2 8 M8 मां (for मा) G2 सरस्वतीं (for पृथूदकम्)

26 K4 om 26 (cf v l 25) G2 om (hapl) $26^{a}$–$27^{b}$ — a) Dn1 D2 5 6 11 T2 [अ]तीव (for [अ]तीत) Dn1 -तपस D6 -मनसं, D8 वचसं (for -वयसं) — b) Ś1 K1-8 Dn रुपङ्गु; T1 2 4 G1 8 उशगु, T8 उशङ्कु (sic) (for रुषङ्गु) T1 2 त (for ते) M उशगु त सदात्मजा — B8 om $26^{c}$–$28^{b}$ — c) D5 ते, D11 तान् (sic), S (except G8, G2 om.) सद् (for तं) B1 D5-7 9 10 च (for वै) T8 उपा नीय (for °निन्यु°) — d) Ś1 K1-8 Dn D11 तपोवन, D5 °निधिं (for °धनम्)

27 K4 om 27 (cf v l. 25) B8 om. 27, G2 om $27^{ab}$ (for both, cf. v l 26) D2 11 om $27^{a}$–$28^{b}$ — a) D8 corrupt M1 सुतैस् (for पुत्रैस्) M2 सदा (for तदा) T2 भीमान् — T8 damaged for $27^{cd}$ — c) D1 T1 2 G1 पुण्य (for पुण्या) — d) T2 विद्वत्संघैर्निषेविता

28 K4 om $28^{ab}$ (cf v l 25) B8 om $28^{ab}$ (cf. v l 26) D2 11 om $28^{ab}$ (cf v l 27) — a) T4 G तत स, T3 * * स (for स तत्र) T3 विधिवद् (for विधिना) — b) K2 आप्लुता (sic), B (B3 om) D (D2 11 om) T1 आप्लुत्य (for °त) D5 8 9 T8 4 G1 M8 स (for सु) — c) D8 तीर्थं (for तीर्थ) Ś1 K1 गुरूश्, D5 (marg as in text) 6 10 वराश्, S (except T8) -गुण (for -गुणाश्) — d) D2 8 11 मुमोद (for प्राहेदम्) G1 सत्तम (for °म) M3 प्राहेद सुमहातपा — e) B1 4 Dn1 D1 6 8 T1 M1 -व्याघ्र (for व्याघ्र) — f) G2 सर्वं (for सर्वान्) Ś1 K1-3 प्रवासत, D2 उवाच ह, D3 11 विव (D11 °न) य च, S इद वच (for उपासत) — After 28, D3 11 ins

244* प्रोवाच कर्म तत्त्वज्ञ प्रीतस्तीर्थस्य दर्शनात् ।

29 a) K2 8 D3-4 11 तीर्थे (for तीरे) — c) K2 पृषदके (for पृथू°) Ś1 K1-3 जप्य (K2 °स्य) मानो, Dn2 D2 8 11 जाप्यपरो, G1 जप्यवरो (for °परो) — d) B1 8 स्व, B1 स्वौ (sic), T1 2 वै (for श्वो) D7 8 भरण (for मरण) K4 तु ये (sic), D4 नयेत्, T4 त्यजेत् (for तपेत्) D2 8 11 न स भूयो भविष्यति, D6 मरणाक्षापयात्यध, Ca नैन श्वोमरण तपेत् (as in text)

30 a) G8 समर्थात्मा (for स धर्मात्मा) — K4 om $30^{c}$–$32^{b}$ — c) D6 बहुधा (hypermetric) (for बहून्) D8 दानान्; S देयान् (for दायान्). — d) M1 2 धर्म (for विप्र)

31 K4 om 31 (cf v l 30) — a) Dn1 om यत्र — b) Ś1 K1 सर्वं, K2 8 S ब्रह्मा (G8 °ह्म) (for लोकाँल्) ❀ Ca (reading लोकालोक) लोका- लोक लोकप्रकाशम् । ❀ — c) B1 8 4 D2 आर्ष्टिसेन — d) D8 ब्रह्मण्य, S ब्राह्मण (for °ण्यं) K2 सश्रित-, Dn1 D1 8-8, 10 शंसि (D5 °शि) व (for संशित-). — e)

ब्राह्मण्यं लब्धवान्यत्र विश्वामित्रो महामुनिः ।
महातपस्वी भगवानुग्रतेजा महातपाः ॥ ३२
तत्राजगाम बलवान्बलभद्रः प्रतापवान् ॥ ३३

इति श्रीमहाभारते शल्यपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

# ३९

जनमेजय उवाच ।
कथमार्ष्टिषेणो भगवान्विपुलं तप्तवांस्तपः ।
सिन्धुद्वीपः कथं चापि ब्राह्मण्यं लब्धवांस्तदा ॥ १
देवापिश्च कथं ब्रह्मन्विश्वामित्रश्च सत्तम ।
तन्ममाचक्ष्व भगवन्परं कौतूहलं हि मे ॥ २

वैशंपायन उवाच ।
पुरा कृतयुगे राजन्नार्ष्टिषेणो द्विजोत्तमः ।
वसन्गुरुकुले नित्यं नित्यमध्ययने रतः ॥ ३
तस्य राजन्गुरुकुले वसतो नित्यमेव ह ।
समाप्तिं नागमद्विद्या नापि वेदा विशां पते ॥ ४　　C 9 2228 B 9 40 4 K 9 41 4

D2 8 11 transp महता and तपसा — f) S प्राप्तवा न्सिद्धिमुत्तमा

32 K4 om 32ab (cf. v. l. 30) D. reads 32 on marg T2 damaged for 32ab — a) K2 सिद्धद्विपश्च, D1 M2 सिंधुद्वीप च, T1 °द्वीपस्य (for °द्वीपश्च) S (T2 damaged) संप्राप्य (M2 °प्य) (for राजर्षि) — b) D2 11 देवर्षिश्च (for देवापिश्च) K2 सत्तम (submetric), D2 महत्तपा (for महातपा) — G1 2 om. (hapl) 32cd. — c) K2 B1. 3-5 Dn D1-4 6-11 तथा मुनि, K4 T G2 M2-4 महातपा, D5 तथैव च, M1 महायशा (for °मुनि) — G1 K1-2 4 (hapl) M1 om 32ef, Dn2 reads it on marg — e) D यशस्वी (for तपस्वी). D2 महता तपसा भगवान् (hypermetric), T G तपस्वी भग(G1 2 बल)वानुग्र — f) S (M1 om) ट(G1 तु) द (for उग्र) D2 M1 4 तेजो (for -तेजा) B5 D1-4 8 11 T1 2 M1 4 यशा (for तपा)

33 a) K4 तद् (for तत्र) D2 4 8 9 T2 4 G2 भगवान् (for बल°) — b) S बलदेव (for °भद्र) T2 G2 महायशा, T1 G1. 3 महातपा (for प्रतापवान्)

Colophon — *Sub-parvan* Ś1 K1 2. 4 B1. 3 4 T1. 2 M2-4 रामतीर्थयात्रा, B2 M1 तीर्थयात्रा, B5 D1. 5 6 8 9 बलदेवतीर्थ°, D2 गदापर्वणि बलभद्रतीर्थ°, D2 11 बलभद्र तीर्थ°, D4 10 हलधरतीर्थ, Cal. Bom ed गदा(Cal ed गदायुद्ध)पर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्यान, Kumbh ed ह्रदप्रवेश — *Adhy name* Ś1 K1 कपाल-मोचन नाम पृथूदके, K3 2 कपालमोचनपृथूदके, T1 2 कपालमोचनं, M2 2 दर्शगुचरितं — *Adhy no* (figures, words or both) B1 G3 40, Dn D5 10 10, T G1 2 M 41 — *Śloka no* Dn D1 37, D. 39

39

1 a) Hypermetric D2 8 11 M1 2 4 किम् (for कथम्) K1 3 B5 D3 आर्ष्टि(K1 °ष्ट्रि, B5 D3 °ष्णि)षेणो, K2 D5 आर्ष्टिष(D3 °ष)णो, B1 2 4 °सेनो (for °षेणो) D5 भगवन्, D11 बलवान् (for भग°) T1. 2 4 G आर्ष्टिषेण कथ ब्रह्मन, T2 आर्ष्टि****** — b) T2 damaged T3 विपुळ, M1 विमलं (for विपुल) K3 कृतवान्विपुल तप, D8 निपुण भगवांस्तप — c) D5 [स]त्र (for [स]पि) T2 **द्वीपधरश्चापि — d) D1 ब्राह्मणं (for °ण्य) K3 तप, K4 तत, D8 9 11 तथा, S (except M1) पुरा (for तदा)

2 a) K4 D2 देवाश्चापि (sic) (for °पिश्च) B1 Dn चापि, T1 2 M1 3 4 राजन्, T2 4 राजा (for ब्रह्मन्) — b) Ś1 K1 तथैव च, B1. 3 D2 8 8 T3 G1 M2-4 च सत्तम, M1 महातपा (for च सत्तम) — c) M3 माम् (for मम) K2 Dn1 D2 7-9 G2 भगवान्, K4 तत्त्वेन (for भगवन्) — d) D2 कौतूहलं, D3 कौतुहलं

3 b) K1. 3 B5 D3 आर्ष्टि(K1 °ष्ट्रि; B5 D3 °ष्णि)षेणो, D8 आर्ष्टिसेनो (for °षेणो) Ś1 K1 महाद्विज, G2 महातपा (for द्विजोत्तम) — c) M1 आसीद्, M3 वसेद् (for वसन्) D2 M1 राजन्, D5 शश्वन् (for नित्य) — d) S (except T2 M1) नियमे(T1. 3 G2 °मा)ध्ययने रत

4 a) G1. 3 तस्मिन् (for तस्य) — b) D1 मितम्

C 9 2289 D 9 40 5 K 9 41 5

स निर्विण्णस्ततो राजंस्तपस्तेपे महातपाः ।
ततो वै तपसा तेन प्राप्य वेदाननुत्तमान् ॥ ५
स विद्वान्वेदयुक्तश्च सिद्धश्चाप्यृपिसत्तमः ।
तत्र तीर्थे वरान्प्रादात्त्रीनेव सुमहातपाः ॥ ६
अस्मिंस्तीर्थे महानद्या अद्यप्रभृति मानवः ।
आप्लुतो वाजिमेधस्य फलं प्राप्नोति पुष्कलम् ॥ ७
अद्यप्रभृति नैवात्र भयं व्यालाद्भविष्यति ।
अपि चाल्पेन यत्नेन फलं प्राप्स्यति पुष्कलम् ॥ ८
एवमुक्त्वा महातेजा जगाम त्रिदिवं मुनिः ।
एवं सिद्धः स भगवानार्ष्टिषेणः प्रतापवान् ॥ ९
तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान् ।
देवापिश्च महाराज ब्राह्मण्यं प्रापतुर्महत् ॥ १०
तथा च कौशिकस्तात तपोनित्यो जितेन्द्रियः ।
तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान् ॥ ११

---

(for नित्यम्) Ś1 K1-3 B2 T1 G2 M3 हि, B1 D -7 9 10 T2 च (for हृ) — c) G1 M3 समाहित् (for °हि) Ś1 K1-3 G1 नागमन, D1 °मा (for °मद्) D1 यथा (sic) (for विद्या) — d) D2 corrupt K2 विद्या (sic), Dn Ca वेदो (for वेदा)

5 ab) D2 सु, D. 8 ख (for स) K2 1 Dn1 D8 11 निर्विणस् (sic), B1 निर्विंसस्, D5 निर्विसस् (for निर्विण्णस्) K2 8 transp ततो राजन् and तप( K° °पा )स्तेपे T8 महायशा (for °तपा) — D° om (hapl) 5c-6d — c) D1 [s]मौ (for वै) D3 [ख]नेन (for तेन) D11 तपसा तेन धीर्णेन — d) Ś1 K1 2 B-- Dn D1 4 6 प्राप, D8 प्राप्त, T8 प्राप्तो (for प्राप्य) D9 देवान् (for वेदान्) M3 ससत्तमान (for अनु°)

6 D6 om. 6 (cf v 1 5) — a) Ś1 K1 D11 स चे( K1 सुवे )दान, K2 8 सविद्यो, M3 om (for स विद्वान) K3 वाद (for वेद) B1 युक्तस्तु, S (except M1) -संयुक्त (for युक्तश्च) — b) M3 सिद्धाप् (for सिद्धश्च) K3 D2-- 8 11 च ऋषि, K3 4 स्वारपि ; G3 चाप्यष्टि (sic) (for चाप्यृपि) D1 -सत्तम — After 6b, G3 ins

245* तताप राजन्संप्राप्य तीर्थे वै सुमहातपा ।

— c) K8 T1 2 M1 तीर्थे (for तीर्थे) T1 2 4 G1 M प्राप्य (for प्रादात्) T8 तत्राप राजस्तीर्थानि — d) T8 त्रीणि (for त्रीन्)

7 Before 7, T8 ins मुनि — a) D5 6 T2 3 M8 तस्मिंस् (for अ°) K2 8 D2 8 11 T8 G1 M नद्याम् (for नद्या) — b) K2 धा न वा; D1 पावन (for मानव) — c) S वाज( T2 8 °जि )पेयस्य (for वाजिमेधस्य) — d) D2 फल K2 8 B Dn D1 8 4 7-11 प्राप्स्यति, D5 प्राप्नोतु, D6 प्राप्यति (for प्राप्नोति) D1 पुष्कलान्, D2 T2 8 पुष्कल, D8 मानव, M8 पुष्कल.

8 Ś1 K1-3 D om (hapl) 8, D11 reads it on marg (sec m) — a) Dn नैवाद्य, 5 व्यात्( T2 °घि )भ्यो (for नैवात्र) — b) D1 15 व्याघ्राद् K4 8 उपेष्यति (for भवि°) S न भयं भविता पुनः — G1 reads 8cd twice — c) D° ° चाल्पेन, G1 (first time) स्व स्पेन (for चाल्पेन) P1 3 Dn D1 4-5 8-11 चाल्पेन, T2 G1 (first time) पुण्येन (for यत्नेन) G1 (second time) ह्यपि चाल्पेन यत्नेन — d) प (G1 both times) सम (for फल) D G1 (both times) प्राप्नोति (for प्राप्स्यति) D1 पुष्कलान्; D T2 पुष्कलं

9 a) G1 उक्तो (for उक्त्वा) D11 महाराज (for °तेजा) — b) B2 4 T2 4 G1 2 पुन, D2 प्रति (for मुनि) — c) D1 सिद्धि स, T1. 2 स सिद्धो (by transp), M1 सिद्धश्च D11 एवं सिद्धा समभवद् — d) K1 आर्ष्टिषेण, B2- आर्ष्णि( B3 °ष्टि )सेन (for आर्ष्टिषेण)

10 T2 om (hapl) 10cd — a) Ś1 K1-3 B Dn T1 अस्मिन् (for त°) Ś1 K1 B D1 4 M1 तथा (for तदा) D2 तस्मिन्नतीर्थे उदा पैव, D8 11 तस्मिंस्तीर्थेन दानेन (D8 ने च) — c) D2 देवापापि, G2 देवा पिश्च Ś1 K1 2 तेजा (for राज) — d) D1 ब्रह्मण्य Ś1 K प्राप तत्, T2 प्रापित, T1 G1 प्राप्तवान (for प्रापतुर्) D2 तदा, M3 महान् (for महत्) G1 ब्राह्मण्यं प्राप्तुमर्हसि

11 a) Ś1 K तत्र; D11 यथ (for तथा) Ś1 K D8 10 11 [ख]पि; D2 स (for च) S तथा (T2 °दा) कुशिकदायादस् — After 11a, D5 reads 13bcd for the first time, repeating it in its proper place D2 om 11bcd — b) D1 जप, D3 जपन्, D6 जपे (for तपो) — c) D3 च सु, T2 M1 चैव (for वै सु) — d) B8 M1 अवाप च (M1 ह) (for °सवान्)

12 b) K1 पुरुषो; G1 प्रवरो (for प्रथितो). D3,

गाधिर्नाम महानासीत्क्षत्रियः प्रथितो भुवि ।
तस्य पुत्रोऽभवद्राजन्विश्वामित्रः प्रतापवान् ॥ १२
स राजा कौशिकस्तात महायोग्यभवत्किल ।
स पुत्रमभिषिच्याथ विश्वामित्रं महातपाः ॥ १३
देहन्यासे मनश्चक्रे तमूचुः प्रणताः प्रजाः ।
न गन्तव्यं महाप्राज्ञ त्राहि चास्मान्महाभयात् ॥ १४
एवमुक्तः प्रत्युवाच ततो गाधिः प्रजास्तदा ।
विश्वस्य जगतो गोप्ता भविष्यति सुतो मम ॥ १५

इत्युक्त्वा तु ततो गाधिर्विश्वामित्रं निवेश्य च ।
जगाम त्रिदिवं राजन्विश्वामित्रोऽभवन्नृपः ।
न च शक्नोति पृथिवीं यत्नवानपि रक्षितुम् ॥ १६
ततः शुश्राव राजा स राक्षसेभ्यो महाभयम् ।
निर्ययौ नगराच्चापि चतुरङ्गबलान्वितः ॥ १७
स गत्वा दूरमध्वानं वसिष्ठाश्रममभ्ययात् ।
तस्य ते सैनिका राजंश्चक्रुस्तत्रानयान्बहून् ॥ १८
ततस्तु भगवान्विप्रो वसिष्ठोऽऽश्रममभ्ययात् । C 9 2303 B 9 40 19 K 9 41 19

---

12 T G2 3 M क्षत्रियप्रवरो भुवि ( D2 3 भुवि , M1 युधि ) — b ) G1 3 M2-4 यस्य ( for तस्य ) K2 3 महा राज ( K2 °जन् ), D3 4 [ऽ]भवद्राजा, D7 भरद्वाज (sic), D11 महानासीद्दं, T1-3 M स्व( T3 [ऽ]प्य )भू द्राजन ( for ऽभवद्रा ) — d ) K4 om ( ? hapl ) from प्रतापवान up to विश्वामित्र ( in 13b )

13 K4 om up to विश्वामित्र ( cf v l 12 ) — a ) T1 G1 2 कुशिकस्तु ( for कौ° ) Ś1 K1 2 तस्य, D7 तत्र, D11 तेन ( for तात ) — D2 reads 13b-d for the first time after 11a — b ) Ś1 K1 2 D2 3 6 8 11 योग्यो, D1 योगी ( for योगी ) M1 transp अभवत and किल D2 किल, D5 पुरा ( for किल ) — c ) B1 अभिषेच्य, Dn D2 °षिच्य ( for °षिच्य ) T1 2 [पु]त्र, T2 4 G M [अा]सु ( for [अ]थ )

14 a ) D11 न्यासेन ( hypermetric ) ( for न्यासे ) T4 मतिं ( for मनश् ) — b ) B1 द्विजा ( for प्रजा ) — c ) K2 D e S महाराज ( for °प्राज्ञ ) — d ) K1 याहि ( for त्राहि ) K2 T4 महद्भयात T2 त्राह्यस्मानिति चाब्रवीत्

15 T2 om 15ab — b ) D2 11 T1 2 G1 3 M1-4 ता वै, T4 स वै, G2 तान्वै ( for ततो ) G1 गाधी, M3 गाधी , M4 गाधि ( for गाधि ) G2 जनास् ( for प्रजास् ) K4 B3- D ( except Dn D2 ) तत ( for तदा ) — c ) S कृत्स्नस्य ( for विश्वस्य ) M3 4 गोपो ( for गोप्ता ) — d ) S भवितेष ( for °ष्यति )

16 a ) D7 तु, T1 2 G1 3 M [अ]थ ( for तु ) T2 ययौ, M3 सुतं ( for ततो ) — b ) T1 2 M ह, G2 वै ( for च ) — c ) T3 च तथा ( for त्रिदिव ) T1 2 4 G3 M जगाम स तदा ( M2 °था ) राजा, G1 3 निर्ज ( G3 °ज )गाम तदा राजा ( G1 °जन् ) — After 16c, S ins

246* पथा वै पुण्यकर्मणाम् ।
तथा गाधिसुतो राजा

[ ( L 1 ) T1 पथि, T2 पदे, T3 यथा, G2 पद, M1 गति ( for पथा ) G1 -कर्मिणा — ( L 2 ) T2 3 तदा, M3 ततो ( for तथा ) ]

— d ) T1-3 G1 2 [ऽ]प्यभून, T4 G3 M ह्यासून् ( for ऽभवन ) T1 4 G1 3 M नृप, G2 श्रुत ( for नृप ) — e ) K2 corrupt B D ( except D2 8 11 ) स ( for च ) — f ) T3 4 G2 अभि- ( for अपि ) T4 -वीक्षितुं ( for रक्षितुम् )

17 a ) D2 5 - सुश्राव T4 राजन् ( for राजा ) D11 T1-3 G2 [अ]सौ ( for स ) — b ) D2 8 11 T3 G1 3 M1 महद्भय, T1, 2 G3 M2-4 भय महत् ( for महाभयम् ) T4 राक्षसेद्रान्महद्भय — c ) K3 निर्ययौ नरनागाश्च — d ) D2 चक्रान्वित , G2 बलैर्युत

18 a ) K2 4 B2 4 Dn D2 3 6 7 9-11 यात्वा ( for गत्वा ) — b ) B2 4 5 D2 3 6 8 वशिष्ठाश्रमम् K3 4 B2 5 D3 - 8 11 अभ्य( K4 °ध्य )गात् ( for °यात् ) —K3 om ( hapl ) 18c-19b, D5 10 ( sec m ) read it on marg T3 damaged for 18cd — c ) T2 4 G3 ततस्, M2-4 तत्र ( for तस्य ) D3 11 T1 से ( for ते ) Ś1 K1 2 तनया ( for सैनिका ) Ś1 K1 तत्र ( for राजश् ) — d ) K1 D2 8 11 चैव ( for तत्र ) D1 8 [अ]न्यान (sic) ( for [अ]नयान् ) T ( T3 damaged ) G जघ्नुस्तत्र मृगान्बहून्, M1 चक्रुस्तस्य भय बहु

19 K3 om 19ab ( cf v l. 18 ) D5 10 read 19ab on marg — a ) B1 स ( for तु ) Dn1 प्रीतो ( for विप्रो ) — D11 om ( hapl. ) 19b-20a — b ) Ś1 K1 2 4 B1 Dn D1, 8 M3 वसिष्ठाश्रमम्, D2 3 वशिष्ठो वनम् ( for वसिष्ठोऽऽश्रमम् ), K4 B5 Dn1 D10 अभ्य( K4 °ध्य )

C 9 2304
B. 9 40.20
K 9 41 19

दद‍र्शे च ततः सर्वं भज्यमानं महावनम् ॥ १९
तस्य क्रुद्धो महाराज वसिष्ठो मुनिसत्तमः ।
सृजस्व शबरान्घोरानिति स्वां गामुवाच ह ॥ २०
तथोक्ता सासृजद्धेनुः पुरुषान्घोरदर्शनान् ।
ते च तद्बलमासाद्य बभञ्जुः सर्वतोदिशम् ॥ २१
तद्दृष्ट्वा विद्रुतं सैन्यं विश्वामित्रस्तु गाधिजः ।
तपः परं मन्यमानस्तपस्येव मनो दधे ॥ २२
सोऽस्मिंस्तीर्थवरे राजन्सरस्वत्याः समाहितः ।
नियमैश्चोपवासैश्च कर्शयन्देहमात्मनः ॥ २३
जलाहारो वायुभक्षः पर्णाहारश्च सोऽभवत् ।
तथा स्थण्डिलशायी च ये चान्ये नियमाः पृथक् ॥ २४
असकृत्तस्य देवास्तु व्रतविघ्नं प्रचक्रिरे ।
न चास्य नियमाद्बुद्धिरपयाति महात्मनः ॥ २५
ततः परेण यत्नेन तप्त्वा बहुविधं तपः ।
तेजसा भास्कराकारो गाधिजः समपद्यत ॥ २६
तपसा तु तथा युक्तं विश्वामित्रं पितामहः ।
अमन्यत महातेजा वरदो वरमस्य तत् ॥ २७
स तु वव्रे वरं राजन्स्यामहं ब्राह्मणस्त्विति ।

---

गात् (for °यात्) T G1 8 वसिष्ठस्तु स्वमा(T1 °स्व क्षा) श्रमे, G2 °स्वाश्रमे तदा, M1 2 4 °आश्रम ययौ —c) D1 8 सहसा, T1 G1 M1 ददर्श (G1 °र्शं) (for ददर्शे) Ś1 स, K1 B D (except Dn1, D11 om) [s]थ, T G तु (for च) K4 ददर्शे सुतरां सर्वं —d) D6 भज्जमान; T G1 2 M वध्य° (for भज्य°) D4 G3 M3-4 महद्वनं, D5 7 9 महाबल (for °वनम्) G3 वध्यमाना न्महात्मना

20 D11 om 20a (cf v.l 19) —a) T1 राजन् (for राज) —b) B (except B1) D3 8 6 11 वशिष्ठो —c) D11 सृजस्व शिविरात्रम्यान्, T G विसृजस्व च(G1 °न्स्व च)लान्घोरान्, M विसृजस्व च(M1 °स्स्व च)र्हं घोरम् —d) Dn गां स्वाम् (by transp)

21 a) D3 यदुक्ता, T2 M8 ततोक्ता (for तथोक्ता) M4 ससृजद् (for सासृ°) —b) K3 दर्शन (for °नान्) —c) T8 damaged from ते च up to तद्दृष्ट्वा (in 22a) D8 9 तु (for च) T4 ते च तस्य बलं सर्वं —d) D1 दिश (for दिशम्)

22 T8 damaged for तद्दृष्ट्वा —a) T4 M8 त (for तद्) K4 B D (except D11) श्रुत्वा (for दृष्ट्वा) D2 विद्रुतं D9 सर्वत; T2 विस्मित (for विद्रुत) —b) Ś1 K1-3 [s]थ (for तु) —c) K4 D5 T1 M4 तत (for तप) D3 मन्यमान —d) D8 तपसं च (for °स्येव)

23 a) K4 तस्मिंस्, Dn योऽस्मिंस् (for सोऽस्मिंस्) M8 तीर्थे (for तीर्थ) K1 वन (for वरे) —b) K2 Dn2 D6 सरस्वत्या, D2 8 11 T1 2 G8 M °त्या (for °त्याः) K2 समोहित (sic), D4 समाश्रित —B1 om 23c–25d —d) N (except K8 D8 11, B1 om) कर्षयन्; S क्षपयन् (M1 येद्) (for कर्शयन्).

24 B1 om 24 (cf v l 23) Dn om 24cd —a) K4 D1 भक्ष्य (for भक्ष) —b) Ś1 K1-3 पर्णभक्षश्च (for पर्णाहारश्च). B2 भारत (for सोऽभवत्) —c) T G M1-4 तत M1 यथ (for तथा) K1, 2 स्थण्डिल°, T4 सन्निम (for स्थण्डिल) —d) M1 त (for ये)

25 B1 om 25 (cf v l 23) —a) T4 सन्यत्र (for असकृत्) Ś1 ह्यस्य, K1 ह्यस्य (for तस्य) T1 2 M8 च (for तु) T4 तप्यमानस्य देवास्तु —c) B2 [ए]वास्य, D5 6 (except M1) तस्य (for चास्य) —d) G M1 अपयाता (for °याति) B1 8 Dn D1 8 11 कदाचन (for महात्मन)

26 a) T4 परम (for परेण) —b) D1 बहुविधि B1 D2 नृप, D4 तत (for तप) —c) M8 भास्करारोगा (sic) (for °राकारो) —d) G1 गाधि समपद्यत

27 B1 damaged from 27a up to 9 40 7d —a) T G1 3 घृणया; G1 प्रणया (sic), M तृष्णया (for तपसा) K3 च, B2 स (for तु) K4 M2-4 समा, D2 T2-4 G1 8 M1 तदा; D5 यथा (for तथा) K1 2 T8 युक्तो (for युक्त) D5 तथा तु तपसा युक्तं —b) K8 महातपा, K4 M1 जनाधिप (K4 °प), D11 M2 4 पितामह (M4 °हं) (for °ह) Ś1 K1 विश्वामित्र पिता महात्, K3 मित्रो बभूव ह —Ś1 K1 2 G1 3 om (hapl) 27c–28d —c) T8 अपृच्छत, G3 अपश्यत (for अमन्यत) —d) T8 G3 damaged D9 यत् (for तत्) K4 वरदो वरदस्य यत्, D2 °दो वरमस्यत (sic), D10 °दोय वर ददौ, T (T8 damaged) M °दोदर्शयत्तदा

28 Ś1 K1 2 G1 3 om 28 (cf v l 27) B1 damaged —a) D9 रुष्टान् (sic) (for राजन्) T8

तथेति चाब्रवीद्ब्रह्मा सर्वलोकपितामहः ॥ २८
स लब्ध्वा तपसोग्रेण ब्राह्मणत्वं महायशाः ।
विचचार महीं कृत्स्नां कृतकामः सुरोपमः ॥ २९
तस्मिंस्तीर्थवरे रामः प्रदाय विविधं वसु ।
पयस्विनीस्तथा धेनूर्यानानि शयनानि च ॥ ३०
तथा वस्त्राण्यलंकारं भक्ष्यं पेयं च शोभनम् ।
अददान्मुदितो राजन्पूजयित्वा द्विजोत्तमान् ॥ ३१
ययौ राजंस्ततो रामो बकस्याश्रममन्तिकात् ।
यत्र तेपे तपस्तीव्रं दाल्भ्यो बक इति श्रुतिः ॥ ३२

इति श्रीमहाभारते शल्यपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

# ४०

वैशंपायन उवाच ।
ब्रह्मयोनिभिराकीर्णं जगाम यदुनन्दनः ।
यत्र दाल्भ्यो बको राजन्पश्वर्थं सुमहातपाः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं वैचित्रवीर्यिणः ॥ १ C 9 2319 B 9 41 2 K 9 42.1

---

श्रुत्वा वने महाराज — b) D11 इह (for इति) M1 वमह ब्राह्मगोम्बिति (sic) — c) M1 चेति (by transp)

29 B3 damaged — a) M1 [स]ग्र्येण (for [ट]ग्रेण) — b) S (except T2) ब्राह्मण्य तु (for °णत्वं) T3 G म(T2 म)हातपा, T4 -महत्तपा (for महायशा) — c) D11 विचचार महर्षी मवां (hypermetric) — d) D2 तस, D11 कृत (for कृत) D1 S सुरोत्त(T4 °प)मः, D3 त्तमात् (for पम)

30 B3 damaged — a) K2 corrupt. D5 आस्विस् (for त°) — b) K4 Dn प्रादाय Ś1 K1–3 विपुल, M2 विविवद् (for विविध) — c) Ś1 K1 2 यशान्वि नीस्, T2.4 G तपान्विस्यम् (for पयस्विनीस्) G2 धीरो (for धेनूर्) — d) T3 G2 देयानि (for यानानि) S विविधानि (for शयनानि)

31 B3 damaged — a) K2 4 B (B3 damaged) Dn D1.2 4–8 10 अथ (for तथा) D5 6 11 S (except T1 2) अलंकारान् — b) D3 5 11 भक्ष्य, D6 T3 4 G2.3 भक्ष्य, D2 भक्ष- (for भक्ष्यं) B T1–3 G M भोज्य, T4 भोज्यान् (for पेय) T1.2 M च केवल, T3 4 G मनुत्तम (T4 °मान्) (for च शोभनम्) — c) K4 B (B3 damaged) Dn D1 4–10 T4 G2 अददत्, D2 3 11 स ददौ (for अददान्) Ś1 K1 B1 D5 पूजितो (for मुदितो) — d) Ś1 K1 भक्षयित्वा (for पूज°)

32 B3 damaged. — a) D3 11 T4 G1 तदा, T3 तथा (for ततो) Ś1 K D2 M3 ययौ रामस्ततो (K4 D2 °दा) राजन् — c) T G1.2 M1 2 तत्र (for यत्र) G1 2 चक्रे (for तेपे) — d) D4 7 दाल्भो बक, S बको दाल्भ्य (by transp) B1 स्मृति°, Dn स्मृत, D3 T2–4 G2 3 M3 श्रुत (for श्रुति) D5 बकदाल्भ्यो महानृषि

Colophon damaged in B3 — *Sub-parvan* Ś1 K B1 2 4 D2.4 10 11 M2 4 रामतीर्थयात्रा, B5 Dn D1 6.9 बलदेवती°, D3 गदापर्वणि रामती°, D5 8 M1 तीर्थयात्रा, Cal. Bom ed गदा(Cal. ed गदायुद्ध)पर्वणि बलदेव-तीर्थयात्रायां सारस्वतोपाख्यान, Kumbh. ed ह्रदप्रवेश — *Adhy name* Ś1 K1–3 विश्वामित्रवरप्रदान, T1 पृथु-कप्रशमनं, T2 पृथक्प्रशामा, M2 4 विश्वामित्रवरलाभ — *Adhy no* (figures, words or both) Ś1 (*sec m*) 40, B4 Dn D9 10 11, B1 G3 41, T G1 2 M 42 — *Śloka no* Dn1 17 (?), Dn2 D7 32, D9 33

## 40

1 B3 damaged for 1–7 — a) K2 3 T1 2 आ-कीर्णो, T3 राजर्षि (for आकीर्णं) Ś1 K1.4 B (B3 damaged) Dn D1.8 ब्रह्मयोनेरि(K4 D1 नेर, B5 Dn °निर)वाकीर्णं, D2–7 9–11 ब्रह्मवोपै(D3 11 °सवै)-रवा — b) K2 corrupt — D2.8 read 1cd twice. D11 repeats 1c after 1d — c) Ś1 K3 T3 M4 तत्र (for यत्र) K2 वलो, T4 महा, G1 मगो (for बको) — After the second occurrence of 1c, D2.11 ins

247* धृतराष्ट्रेण सत्कृत ।
किंचिक्षपां पदे मात्रं (sic)
[D11 om line 2]

C 9 2210
B 9 41 2
K 9 42 2

तपसा घोररूपेण कर्शयन्देहमात्मनः ।
क्रोधेन महताविष्टो धर्मात्मा वै प्रतापवान् ॥ २
पुरा हि नैमिषेयाणां सत्रे द्वादशवार्षिके ।
वृत्ते विश्वजितोऽन्ते वै पाञ्चालानृषयोऽगमन् ॥ ३
तत्रेश्वरमयाचन्त दक्षिणार्थं मनीषिणः ।
बलान्वितान्वत्सतरान्निर्व्याधीनेकविंशतिम् ॥ ४
तानब्रवीद्बको वृद्धो विभजध्वं पशूनिति ।
पशूनेतानहं त्यक्त्वा भिक्षिष्ये राजसत्तमम् ॥ ५
एवमुक्त्वा ततो राजन्नृषीन्सर्वान्प्रतापवान् ।
जगाम धृतराष्ट्रस्य भवनं ब्राह्मणोत्तमः ॥ ६
स समीपगतो भूत्वा धृतराष्ट्रं जनेश्वरम् ।
अयाचत पशून्दाल्भ्यः स चैनं रुषितोऽब्रवीत् ॥ ७
यदृच्छया मृता दृष्ट्वा गास्तदा नृपसत्तम ।
एतान्पशून्नय क्षिप्रं ब्रह्मबन्धो यदीच्छसि ॥ ८
ऋषिस्त्वथ वचः श्रुत्वा चिन्तयामास धर्मवित् ।
अहो बत नृशंसं वै वाक्यमुक्तोऽस्मि संसदि ॥ ९
चिन्तयित्वा मुहूर्तं च रोषाविष्टो द्विजोत्तमः ।
मतिं चक्रे विनाशाय धृतराष्ट्रस्य भूपतेः ॥ १०

---

— $^{d}$) D2 8 (both second time) पावक, T4 G2 पश्चार्थी, G8 वह्न्यर्थं, M2–4 पार्थस्य (for पश्वर्थं) K1 B (B3 damaged) D (D2 8 first time) आश्रमस्थो महातपा — D11 om $1^{ef}$ — $^{e}$) T1 2 जहार (for जुहाव) — $^{f}$) D8 राष्ट्रे (sic), M8 राज्य (for राष्ट्र) D5 om वैचित्र वीर्यिण D1 राष्ट्रस्यैश्चित्रवर्षिण, S राष्ट्र कोपसमन्वित

2 B3 damaged — $^{b}$) N (except D2 5 10, B3 damaged) G2 कर्पयन्, T1 दश°; G1 3 हृश° (for कर्श°) — D5 om $2^{c}$–$3^{b}$

3 D8 om $3^{ab}$ (cf. v l 2) B3 damaged — $^{a}$) K4 B (B3 damaged) Dn D1 6 7 9 10 नैमिर्षीयाणा (K4 °नां), D3 S नैमिशेयाना (D8 °पेयाना, T4 °शय्याना), D4 नैमृषियाणा (sic) — T8 om $3^{c}$ — $^{c}$) G1 वृत्त. K2 4 D2 8 11 T1 विश्वजिते, D3 °जिता, T4 G1 °जित; M वैश्वजितस्य (for विश्वजितो) Ś1 K1 3 [अ]त वै, K4 S (T8 om) चैव, D5 ते वै (for ऽन्ते वै) — $^{d}$) B (B3 damaged) Dn1 D1 3 4 6 7 9–11 पचालान्; D2 पांचाळान् B5 मुनयो (for ऋषयो) Ś1 K1–3 पाचाल(K3 पचाम्नि)पतयोगमन्

4 B3 damaged — $^{b}$) S दक्षिणार्थे Dn2 मनीपिणं, D11 °पिभि, T4 G1 3 महात्मन (for मनीषिण) — After $4^{b}$, T G ins

248* तत्र ते लेभिरे राजन्पाञ्चालेभ्यो महर्षय ।
[ G2 [ए]ने (for ते) T2 भेजिरे (for लेभिरे) ]

— $^{c}$) M पयोन्वितान्वत्सध(M1 °धा)रान् — $^{d}$) D1 निर्घातान् (for निर्व्याधीन्) S सप्त (for एक) — After 4, D2 8 11 ins

249* तेषां विभवदो राजा ब्राह्मणाना वृपास्तदा ।
[ D2 हि (for वि-) ]

5 B3 damaged — $^{a}$) B (B3 damaged) Dn D1 4–6 8–10 T3 G2 दाल्भ्यो, D7 दा°भो; T1 2. 4 G1 3 M विप्रो (for वृद्धो) — $^{b}$) D3 corrupt — $^{d}$) K3 om (hapl) from भिक्षिष्ये up to एवमुक्त्वा (in $6^{a}$) D5 भक्षिष्ये (sic) D1 मत्तम

6 K3 om एवमुक्त्वा (cf. v l 5) D1 om (hapl) 6 B3 damaged — $^{a}$) K4 D2 11 S बको, D5 ऋषीन् (for ततो) — $^{b}$) D5 सर्वांश्चैव (for ऋषीन्सर्वान्) M1 समागतान् (for प्रतापवान्) — $^{d}$) Ś1 K1 द्विजसत्तम (for ब्राह्मणो°)

7 B3 damaged — $^{a}$) T4 परो (for -गतो) B4 दृष्ट्वा (for भूत्वा) T1 2 स समीप ततो भूत्वा — $^{b}$) D5 T3 नरेश्वर (for जने°) — $^{c}$) Dn1 दात्य (sic), Dn2 corrupt (for दाल्भ्य) — $^{d}$) M1 [ए]व (for [ए]नं) D2 11 ऋपि(D11 °पी)तो, D4 5 द्वपितो, T1–3 ऋपिम्, G1 ऋपिर् (for रुपितो)

8 $^{a}$) B1–3 Dn1 D1 4 5 M4 मृतान्, T2 गता; G1 मृतं (for मृता) — $^{b}$) K1 4 B Dn D1 2 4 7–11 G2 3 M -सत्तम T3 गास्तया मुनिसत्तम — $^{d}$) Dn2 D2 3 T1 2. 4 G2 यदिच्छसि, D3 न यच्छसि, D7 यदी*सि

9 $^{a}$) K2 त्वप, B2 5 D5–7 9 10 तथा (for त्वथ) D6 (marg as in text) त्रिर्थ श्रुत्वा, S बक क्रु(T2 °को वृ)द्धस् (for वच श्रुत्वा) — $^{b}$) K2 रोपाविष्टो द्विजोत्तम (= $10^{b}$) — $^{c}$) M1 अहो चैतन्, M2 यदृच्छया, M3 अहो बको (for अहो बत). Ś1 K1–3 नृशंसा, D11 °सो (for °सं) — $^{d}$) Ś1 K1–3 वाचम् (for वाक्यम्)

10 $^{a}$) B1–3 5 D5–7 9 10 T1 मुहूर्तेन; B4 Dn D1. 2 4 8 मुहूर्तं तु (D1 स, D2 4 8 वै) — Ś1 K1. 2 om (hapl) $10^{c}$–$11^{b}$ — $^{d}$) K3 धीमत; D1 धीमते°;

स उत्कृत्य मृतानां वै मांसानि द्विजसत्तमः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेः पुरा ॥ ११
अवकीर्णे सरस्वत्यास्तीर्थे प्रज्वाल्य पावकम् ।
बको दाल्भ्यो महाराज नियमं परमास्थितः ।
स तैरेव जुहावास्य राष्ट्रं मांसैर्महातपाः ॥ १२
तस्मिंस्तु विधिवत्सत्रे संप्रवृत्ते सुदारुणे ।
अक्षीयत ततो राष्ट्रं धृतराष्ट्रस्य पार्थिव ॥ १३
छिद्यमानं यथानन्तं वनं परशुना विभो ।
बभूवापहतं तच्चाप्यवकीर्णमचेतनम् ॥ १४
दृष्ट्वा तदवकीर्णं तु राष्ट्रं स मनुजाधिपः ।
बभूव दुर्मना राजंश्चिन्तयामास च प्रभुः ॥ १५
मोक्षार्थमकरोद्यत्नं ब्राह्मणैः सहितः पुरा ।
अथासौ पार्थिवः खिन्नस्ते च विप्रास्तदा नृप ॥ १६
यदा चापि न शक्नोति राष्ट्रं मोचयितुं नृप ।
अथ वैप्राश्निकांस्तत्र पप्रच्छ जनमेजय ॥ १७
ततो वैप्राश्निकाः प्राहुः पशुविप्रकृतस्त्वया । C 9 317 B 9 41 20 K 9 42. 20

---

D2 11 भूपते, S भारत (for भूपते)

11 Ś1 K1 2 om 11ab (cf 1 1 10) — a) K3 B (except B1) D (except D2 11) स तूत्कृत्य, T G उत्कृत्य तु (G2 च) (for स उत्कृत्य) T1 ² मृता गा, T3 4 तदा गा, G1 2 मृता गा (for मृताना) K2 D3 च (for वै) — b) M1 मासेन K3 B Dn D1 ⁻ 9 10 मुनि (for द्विज) D2 11 T4 सत्तम — d) D3 च नृपते (for नरपते) K2 पुर, D5 तदा, D9 सदा, S पर (for पुरा)

12 a) K4 T2 अवकीर्ण, D11 D4 6 8 9 11 अवा कीर्णे, T1 2 4 G M1 2 अवतीर्ण (G1 M2 र्णे) (for कीर्णे) D2 सरस्वत्या; D9 11 T2 M2 °त्या (for °त्यास्) — b) D11 T2 M1 तीरे (for तीर्थे) K2 D3 प्र(D3 प्रा)ज्वल्य — Ś1 K1. 2 4 D2 11 om 12cd — c) G2 तत पर (for बको दाल्भ्यो) — d) D5 9 परम स्थित S पर नि(T2 जपं नि, T4 G1 2 जपरि)यममास्थित — e) M2 om स Ś1 K1 [अ]थ, T G [अ]सौ (for [अ]स्य) — f) D2 T3 राष्ट्रे, T4 राज्य (for राष्ट्र) Ś1 K1 मस्य, K2 8 किन्, T3 माम (for मांसैर्)

13 b) S वर्तमाने (for सप्रवृत्ते) T4 [s]ति (for सु) — c) T3 तथा, T4 G तदा (for ततो) — d) S (except G1 M1) भारत (for पार्थिव) — After 13, N ins

250* तत प्रक्षीयमाणं तद्राष्ट्र तस्य महीपते ।

[ K2 तु (for तद्) B3–5 D1 2 6–8 राज्य; D4 रट्र (sic) (for राष्ट्र) K2 B1 D2 4 8 महीपत ]

14 a) Ś1 K1 8 पच्यमान (for छिद्य°) K1 यथा नतं, K4 यथारत्तद्, B5 यथावत्तु, D2 तथान ते (sic), D2 11 यथा रम्य, T G यथा कांत (for यथानन्त) — b) D1 om. वन D8 विभो, D11 T यथा, G1 2 तथा (for विभो), — c) B1–3 Dn D2, 4, 6, 7 9 10 [अ]पहृत, B4 D5 S [अ]पहृत, B [उ]पद्रुत, D1 [अ]पकृत, D2 11 [अ]थ हुत, D5 [अ]पगत (for हृत) G2 तद्वद् (for तच्च) — d) B Dn D1 2 4–10 T G1 8 स्यन(D6 T2 प)कीर्णम्, D11 G2 अव (for [अ]प्यव°)

15 a) K4 D3 तमव, B1–4 Dn1 D1 2 4–11 तथा (B1 °दा)व, B5 तथ्यव, Dn2 तया च (for तदव) Ś1 K1 च (for तु) — b) S (except T1) राज्य (for राष्ट्र) B1 मनु*धिप, D3 8 मनुजाधिप, T4 च जनाधिप — c) D11 निर्मना (for दुर्मना) — d) D8 11 पार्थिव, T1 2 च प्रभो, T4 M3 स (M3 चै) प्रभु (for च प्रभु)

16 b) K2 पुर, D5 तदा (for पुरा) M1 ब्राह्मणै सह पार्थिव — After 16b, K4 (marg) B D ins

251* न च श्रेयोऽध्यगच्छत्तु क्षीयते राष्ट्रमेव च ।

[ K4 B1 Dn D2 [s]ध्यगच्छत्स, B1 D1 °गच्छत, D3 6 11 [s]धिगच्छन्त (D5 °त्तु), D10 [s]ध्यगच्छत्तत् (for गच्छत्तु) B1 2 D3 11 एव तु (B1 तत), D5 इत्युत (for एव च) ]

— c) B Dn D1 2 4–10 यदा (D2 था) स, G3 असौ च, M3 ययासौ D1 क्षीणम्, D3 छिन्नस् (for खिन्नस्) — d) K4 D3 11 तथा, T3 G2 M यथा (for तदा) B Dn D1 2 4–10 [अ]नघ, D8 11 G2 नृप, T3 नृप

17 B1–4 Dn D1 3 7 9–11 om (hapl) 17ab — a) T2 यथा (for यदा) D1 6 वा (for च) M1 शक्तो भूद् (for शक्नोति) — b) T3 राज्यं (for राष्ट्रं) K2–4 B5 D1 4–6 8 T3 4 G मोक्षयितुं (for मोच°) K3 4 D1 6 T1. 2 G1 2 M1 2 4 नृप — K2 M3 om 17cd — c) D1 ततो (for अथ) K4 अथ वैप्राश्निकाना तु, D3 5 अ(D5 त)थैन प्राश्निकास्तत्र, S (M3 om) अथ विप्रादि(T2 3 °प्राधि, M1 °प्रश्नि, M2 4 प्राश्नि) कांस्तया — d) D1, 9 10 पप्रच्छुर्

C 9 2337 B 9 41 20 K 9 41. 20 मांसैरभिजुहोतीति तत्र राष्ट्रं मुनिर्बकः ॥ १८
तेन ते हूयमानस्य राष्ट्रस्यास्य क्षयो महान् ।
तस्यैतत्तपसः कर्म येन ते ह्यनयो महान् ।
अपां कुञ्जे सरस्वत्यास्तं प्रसादय पार्थिव ॥ १९
सरस्वतीं ततो गत्वा स राजा बकमब्रवीत् ।
निपत्य शिरसा भूमौ प्राञ्जलिर्भरतर्षभ ॥ २०
प्रसादये त्वा भगवन्नपराधं क्षमस्व मे ।
मम दीनस्य लुब्धस्य मौर्ख्येण हतचेतसः ।
त्वं गतिस्त्वं च मे नाथः प्रसादं कर्तुमर्हसि ॥ २१
तं तथा विलपन्तं तु शोकोपहतचेतसम् ।
दृष्ट्वा तस्य कृपा जज्ञे राष्ट्रं तच्च व्यमोचयत् ॥ २२
ऋषिः प्रसन्नस्तस्याभूत्संरम्भं च विहाय सः ।
मोक्षार्थं तस्य राष्ट्रस्य जुहाव पुनराहुतिम् ॥ २३
मोक्षयित्वा ततो राष्ट्रं प्रतिगृह्य पशून्बहून् ।
हृष्टात्मा नैमिषारण्यं जगाम पुनरेव ह ॥ २४
धृतराष्ट्रोऽपि धर्मात्मा स्वस्थचेता महामनाः ।
स्वमेव नगरं राजा प्रतिपेदे महर्द्धिमत् ॥ २५
तत्र तीर्थे महाराज बृहस्पतिरुदारधीः ।

---

18 a) K2 D1 M3 4 अथ (for ततो) D1 ते प्राश्निका, D2 4 8 वै ब्राह्मणा, T G विप्रादि(T2 3 °धि)का, M विप्र(M1 °प्रा)श्निका (for वैप्रा°) D2 प्रोचु, T3 चाहु (for प्राहु) — b) Ś1 K1 2 ऋपिर्, K3 ऋपिं; B1 2 Dn D10 T1 पशुर्, B6 D11 पशुं, T2 पशोर् (for पशु) D3 4 पशुभिर्विकृतस्त्वया, T3 G2 पश्वर्थिनिकृत°, T4 प्रकृतीन्प्रकृत° — c) Ś1 K3 अपि, D3 11 उप-, T G M1 2 4 अथ, M3 इह (for अभि) Ś1 K1 [इ]त्र, K2 3 [पु]त्र, K4 D3 11 [इ]ह, S (except T4) [इ]द (for [इ]ति) — d) D2 धृत राष्ट्र, S राष्ट्र तव (by transp) D5 बको मुनि (by transp)

19 a) K3 कूपमानस्य (sic), D5 हूयमाणस्य — b) M1 राज्यस्य (for राष्ट्रस्य) Ś1 K1-3 [अ]घ, T1 2 [आ]सीत् (for [अ]स्य) D3 11 क्षयोभवत्, T3 महान्क्षय° (by transp) — After $19^{b}$, T4 ins 252* Ś1 K D1 2 T4 om (hapl) $19^{cd}$ — c) S (T4 om) तन् (for [ए]तत्) D8 तपसा — d) B2 6 [ए]प; D6 वै (for ते) B3 4 D5 7 9 10 [s]घ लयो, D6 प्रलयो, M3 [s]प्यनयो (for ह्यनयो) — T1-3 G M ins after $19^{d}$ T4 after $19^{b}$

252* यदीच्छसि महाबाहो शान्तिं राष्ट्रस्य भूमिप ।
[ T1 3 4 G1 2 यदिच्छसि ]

— e) T3. 4 G2 त(T4 अ)स्मिन्, G1 3 असौ; M1 अर्वाक् (for अपां) D8 कुंभे, D3 T4 कुले, T1-3 G M1 कूले (for कुञ्जे)

20 a) M3 दृष्ट्वा (for गत्वा) — c) G1 निपात्य T3 सहसा, M2 तरसा (for शिरसा) D5 पादौ (for भूमौ) — d) K2 प्राजलिर्भरतर्षभ, M2-4 °यपीडित

21 a) K3. 4 B D G3 त्वा (for त्वा) — b) K4 न (for मे) — c) D1 मदस्य (for लुब्धस्य) Ś1 K1-3 मम लुब्धस्य दीनस्य, M1 मदीभूतस्य लुब्धस्य — d) K2 B1 3 D6-8 G3 मौर्ख्येन, D3 11 मोर्खे(D11 °र्ख्ये)ण, D5 T3 G2 मूर्ख(D5 °र्ख)स्य, M1 मौढ्येन (for मौर्ख्येण) T1 2 G1 3 हत (for हत-) M2-4 मौर्ख्येणाक्षे(M3 °ण क्ष)पितो ह्यसि — e) Dn D3 11 G1 M1 नाथ

22 a) D1 2 तत् (for त) T4 तदा (for तथा) — b) K2 3 D2 4 8 -चेतन, D11 -चेतस (for °सम्) — c) M3 तत्र (for तस्य) K3 याज्ञे; D5 11 यज्ञे (for जज्ञे) — d) K4 B2 4 5 D8 11 S तस्य, D2 चैव (for तच्च) K4 व्यमोक्षयत्, T1 G1 3 विमोचयत्

23 a) K2 corrupt B3 4 T2 M2-4 [आ]सीत् (for [अ]भूत्) — b) K2 मोक्षयित्वा, Dn सरस्तं च (sic) (for संरम्भं च) D3 विहाय च, D5 °सत (for °य स) — c) M2 (orig, *sup lin* as in text) मोक्षाय (for मोक्षार्थं) B2 6 D6 10 राज्यस्य (for राष्ट्रस्य) — d) K4 G1 आहुती

24 a) T1 2 तथा (for ततो) — b) D3. 11 प्रगृह्य च; M2-4 सप्रगृह्य (for प्रति°). B3 बहून्पशून् (by transp), S तथा (T4 G1 [*sup lin* as in text] 3 यथा, M3 तयो) पशून् — c) S नैमिषारण्यं (T3 °ण्यैर्) — d) K4 B (except B1) D1. 4-10 G2 च, D2 3 11 स, T4 हि (for ह) K2 पुनरेव जगाम ह

25 a) M4 महातेजा (for ऽपि धर्मात्मा) — b) B1 सुस्थ, B2 सुष्ट (for स्वस्थ) D2 4 8 -सपा (for मना) — T3 damaged for $25^{cd}$ — c) K4 T (T3 damaged) G3 M भवन (for नगरं) T4 G1 3 M2-4 राजन् (for राजा) — d) D3. 11 S (T3 damaged) प्रविवेश (for प्रतिपेदे).

असुराणाममावाय भावाय च दिवौकसाम् ॥ २६
मांसैरपि जुहावेष्टिमक्षीयन्त ततोऽसुराः ।
दैवतैरपि संभग्ना जितकाशिभिराहवे ॥ २७
तत्रापि विधिवद्दत्त्वा ब्राह्मणेभ्यो महायशाः ।
वाजिनः कुञ्जरांश्चैव रथांश्चाश्वतरीयुतान् ॥ २८
रत्नानि च महार्हाणि धनं धान्यं च पुष्कलम् ।
ययौ तीर्थं महाबाहुर्यायातं पृथिवीपते ॥ २९

यत्र यज्ञे ययातेस्तु महाराज सरस्वती ।
सर्पिः पयश्च सुस्राव नाहुषस्य महात्मनः ॥ ३०
तत्रेष्ट्वा पुरुषव्याघ्रो ययातिः पृथिवीपतिः ।
आक्रामदूर्ध्वं मुदितो लेभे लोकांश्च पुष्कलान् ॥ ३१
ययातेर्यजमानस्य यत्र राजन्सरस्वती ।
प्रसृता प्रददौ कामान्ब्राह्मणाना महात्मनाम् ॥ ३२
यत्र यत्र हि यो विप्रो यान्यान्कामानमीप्सति । C 9 om B 9 41 om K 9 42. om

---

26 $^{a}$) M अत्र (for तत्र) D1 तीर्थं — $^{c}$) D6 असुराणाम् — $^{d}$) K3 B (except B1) D1-3 6 7 9-11 T2 3 भवाय, T4 G जयाय (for भावाय) K4 D3 11 हि (for च) D (marg. sec. m) चनाय दिवौकसा

27 $^{a}$) D (except D3 11) T2 3 G M1 अपि (for अपि) D T2 4 [अ]मिम् (for [इ]ष्टिम्) — $^{b}$) K4 अक्षयत, D1 अक्षीय (sic) (for अक्षीयन्त) T1 ततो क्षीयन्त तेऽसुरा — $^{c}$) Ś1 K1 Dn1 D2 6 देवतैर्, B1 स दैवैर् (sic), D2 तैर धर् (sic) (for दैवतैर्) Dn2 D3 4 8 M2 अपि T2. 4 G1 2 इह (for अपि) B1 D3 4 नाविभा, M3 समग्रा

28 T2 damaged — $^{a}$) D2 तत्र (for तत्र) T4 G1 3 विधिवत् (for विधिवद्) Dn2 गत्वा (for दत्त्वा) — $^{c}$) K4 वाजिनि, G1 न (for न) — $^{d}$) D2. 11 अश्वतरी (for घा) D5 शुभान् (for युतान्) T2 M1 रथाश्वतरीगिन्या

29 $^{a}$) Ś1 K4 महावाणि, K1 रत्नाणि (sic), T G2 3 M2-4 रत्न, G1 राजन् (for र्हाणि) — $^{b}$) K3-4 Dn1 D2 8 S (except T2) धन (for धन) D2 T2 पुष्कल — $^{c}$) T1-3 M महागत (for बाहुर्) — $^{d}$) T1 ययात Dn1 पते (for पते) D1 ययाते पृथिवीपते, G2 ययात पुण्यमुत्तमं

30 $^{a}$) K3 B (except B1) D (except D1 6 8 10) T (except T2) G3 M2 4 तत्र, M3 ततो (for यत्र) B1 जज्ञे, D2 तत्र, D9 यज्ञे, T2 यज्ञो (for यज्ञे) B1 D1 6-7 9 10 च (for तु) — $^{b}$) T2 4 G यत्र (T4 यौ, G1 2 स्मा) राजन (for महाराज) — After 30$^{b}$, G3 reads 32$^{cd}$ for the first time, repeating it in its proper place — $^{c}$) Dn1 सर्पिष् (sic), T1 सस्तु (for सर्पि) T2 पयस्या, T1 पयासि (for पयश्च) K4 D1 2 6 7 सुस्राव, D1 8 8 सुस्राव — $^{d}$) Ś1 K1 नहुषस्य

31 T2 damaged for 31$^{ab}$ — $^{a}$) D3 तदृष्ट्वा, D10 तत्रेष्ट्या, Dn1 त दृष्ट्वा (for तत्रेष्ट्वा) S (except G2, T2 damaged) पुरुषव्याघ्र — $^{c}$) K4 D1-9 T2 अक्रामद्, D3 6 11 आक्र° T2 ऊर्ध्वम् (for ऊर्ध्वं) S स्वरितो (for मुदितो) — $^{d}$) T2 रेमे (for लेभे) K1 लोकांश्च, S कामाश्च (for लोकांश्च) D2 T2 पुष्कळान — After 31, B D (except D3 11) ins

253* पुनस्तत्र च राजस्तु ययातेर्यजत प्रभो ।
औदार्यं परम कृत्वा भक्तिं चात्मनि शाश्वतीम् ।
ददौ कामान्ब्राह्मणेभ्यो यान्यान्यो मनसेच्छति ।
यो यत्र स्थित एवेह आहूतो यज्ञसंस्तरे ।
तस्य तस्य सरिच्छ्रेष्ठा गृहादिशयनादिकम् । [5]
यत्र समोजन चैव दान नानाविध बहु ।
ते मन्यमाना राजस्तु सप्रदानमनुत्तमम् ।
राजान तुष्टुवु प्रीता दत्त्वा चैवाशिष शुभा ।

[ D2 om lines 1-3 — (L 1) D9 तस्य (for तत्र) D5 च (for तु) B1 3 Dn1 D1 4 6-10 प्रभो — (L 2) B5 दृष्ट्वा (for कृत्वा) — (L 3) D3 या न्यान्स मनसेप्सितान् (for the post half) — (L 4) D2 [आ]श्रित (for स्थित) B5 यत्नतो (for आहूतो) — (L 5) Dn तत्र तत्र (for तस्य तस्य) B3 गृहाणि (for गृहादि-) — (L 6) B1 2 5 D10 पद्मम (for यत्र स) D4 धन (for दान) Bom ed तथा (for बहु) Dn1 D6 7 9 दानानि विविध बहु, D5 10 दानानि विविधानि च (D5 om च) (for the post half) — (L 7) D2 सप्रधानम् — (L 8) B Dn1 ददुश्च (for दत्त्वा) ]

32 B D (except D3 8. 11) om 32-33 — $^{a}$) Ś1 D2 11 यजातेर् — $^{b}$) M1 यस्मा (for यत्र) — G3 reads 32$^{cd}$ for the first time after 30$^{b}$ — $^{c}$) K1 T3 4 G1. 2 प्रस्तुता, K2 8 प्रसन्ना, K4 प्रभूतान्, M1 प्रस्तुता (for प्रसृता) M2-4 राजन् (for कामान्) D3 आश्रिताना ददौ कामान्, T2 सृता प्रययौ राजन् (sic)

C 9 om
B 9 41 om
K 9 42 cm.

तत्र तत्र सरिच्छ्रेष्ठा ससर्ज सुबहून्रसान् ॥ ३३
तत्र देवाः सगन्धर्वाः प्रीता यज्ञस्य संपदा ।
विस्मिता मानुषाश्चासन्दृष्ट्वा तां यज्ञसंपदम् ॥ ३४
ततस्तालकेतुर्महाधर्मसेतु-
र्महात्मा कृतात्मा महादाननित्यः ।
वसिष्ठापवाहं महाभीमवेगं
धृतात्मा जितात्मा समभ्याजगाम ॥ ३५

इति श्रीमहाभारते शल्यपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

# ४१

जनमेजय उवाच ।
वसिष्ठस्यापवाहो वै भीमवेगः कथं नु सः ।
किमर्थं च सरिच्छ्रेष्ठा तमृषिं प्रत्यवाहयत् ॥ १
केन चास्याभवद्वैरं कारणं किं च तत्प्रभो ।

---

33 B D (except D2 8 11) om 33 (cf v l 32) — a) K1 T3 G2 स्थितो, T4 [स्र]भितो (for हि यो) — c) G2 तस्य तस्य (for तत्र तत्र) K1 श्रेष्ठान् — d) K2 रजान् (sic) (for रसान्)

34 a) B6 ततो (for तत्र) T4 सु (for स) — b) K2 om. (? hapl) from प्री up to ता (in $34^{d}$) T1.2 सपदा — c) D8 वत्सला (for विस्मिता) T1 3.4 G M हि (for च) T2 विस्मिता नरशार्दूल — d) Ś1 K1 T3 4 यज्ञस्य (for तां यज्ञ) K2.4 B4 D8 -सपदा

35 a) K4 प्रीतस्तालकेतुर् (hypermetric), D1 लोक हेतुर्, T ताळकेतुर् (for ताल°) M2 4 महान् (for महा) D7 G1 om (hapl), D9 महात्मा कृतात्मा (for °धर्मसेतुर्) T4 om from धर्म up to कृता (in $35^{b}$) Ś1 K (except K4) B (except B6) Dn D1-6 8 10 -केतुर् (for सेतुर्) — b) D9 मुदा तत्र दत्त्वा, G2 कृतात्मा महात्मा (by transp) K4 महाधर्मनित्य, M1 ददौ वै महादाननित्य° (hypermetric) (for महादान नित्य°) — c) D2 3 8 11 वशिष्ठापवाह K2 3 -भीम वेगो; D2 8 रुद्रवेग (for -भीम°) D8 वसिष्ठापवाहां महाभीमवेगां — d) K4 कथं धृतात्मा (hypermetric), D5 10 महात्मा, D6 7 9 वृतात्मा (for धृ°) D4 om. (hapl), D5 10 कृतात्मा (for जि°)

Colophon — *Sub-parvan* Ś1 K1 3 B1 3 4 Dn M2 4 रामतीर्थयात्रा, K4 गदायुद्धे रामतीर्थयात्रा, B5 D1-3 6 8-10 बलदेवतीर्थयात्रा, D4 M1 तीर्थयात्रा, Cal Bom ed गदा (Cal ed गदायुद्ध) पर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्यान, Kumbh. ed ह्रदप्रवेश — *Adhy name* Ś1 K1 3 बकोपाख्यान, G1 यायातमाहात्म्य, M2 4 बकमाहात्म्य — *Adhy no* (figures, words or both) B3 22, B4 G3 42, Dn D9 10 12, D7 10, T G1 2 M 43, Bom ed 41 — *Śloka no* Dn1 37, Dn2 38, D9 40

41

1 a) B2 6 D2 5 6 11 वशिष्ठस्य Ś1 K1-3 अपवाहे D8 om from वै up to प्रभाव च (in line 5 of 254*) K4 B Dn D1-3 5-7 9-11 [ऽ]सौ, D4 om. (for वै) T1 G1 3 वासिष्ठापवाहो ब्रह्मन्वै (hypermetric), T2 3 °ष्ठापवहे ब्रह्मन्, T4 वासिष्ठेपमहाब्रह्मन् (sic), G2 वसिष्ठवाहो ब्रह्मन्वै — b) K2 M2 भीमवेगा D2.4 5 11 T4 तु (for नु) K2 T4 मे, M2 4 मा (for स) — c) D11 T4 तु, M1 हि (for च) — d) T2 किमर्थं (for तमृषिं)

2 D8 om 2 (cf v l 1) — a) K4 केन वास्य, B (except B5) Dn D1 4-7 9 10 कथमस्य, T G2 M1 3 4 केन चा(M3 4 वा)पि (for केन चास्य) T2 4 G3 ब्रह्मन् (for वैरं) G1 3 केन चापवहद्ब्रह्मन् — b) T3 कारणात् Ś1 K1 किं च वै; K4 किंचन, D3 11 किं नु (D3 तु) वै (for किं च तत्) D2 3 11 विभो (for प्रभो) — c) S वद (for शंस) K4 B4 महाप्राज्ञ, B3 °भाग, M3 °राज (for °प्राज्ञ) D2 3 11 सर्वमेतत्समाचक्ष्व — d) T3 4 G च (for हि) B1 तिष्ठामि, T3 तृप्स्यामि (for तृप्यामि) B1-4 Dn D6 7 9 कथ्यति, B5 °त, D5 °ते, T1 2 M से वच, T3 4 G कर्हिचित् (for कथ्यताम्)

3 D3 om 3 (cf v l 1) — a) K2 B2 5 देव-

श्रमं पृष्टो महाप्राज्ञ न हि तृप्यामि कथ्यताम् ॥ २

वैशंपायन उवाच ।

विश्वामित्रस्य चैवर्षेर्वसिष्ठस्य च भारत ।
भृशं वैरमभूद्राजंस्तपःस्पर्धाकृतं महत् ॥ ३
आश्रमो वै वसिष्ठस्य स्थाणुतीर्थेऽभवन्महान् ।
पूर्वतः पश्चिमश्चासीद्विश्वामित्रस्य धीमतः ॥ ४
यत्र स्थाणुर्महाराज तप्तवान्सुमहत्तपः ।
यत्रास्य कर्म तद्घोरं प्रवदन्ति मनीषिणः ॥ ५
यत्रेष्ट्वा भगवान्स्थाणुः पूजयित्वा सरस्वतीम् ।
स्थापयामास तत्तीर्थं स्थाणुतीर्थमिति प्रभो ॥ ६
तत्र सर्वे सुराः स्कन्दमभ्यषिञ्चन्नराधिप ।
सैनापत्येन महता सुरारिविनिबर्हणम् ॥ ७
तस्मिन्सरस्वतीतीर्थे विश्वामित्रो महामुनिः ।
वसिष्ठं चालयामास तपसोग्रेण तच्छृणु ॥ ८
विश्वामित्रवसिष्ठौ तावहन्यहनि भारत ।
स्पर्धां तपःकृतां तीव्रां चक्रतुस्तौ तपोधनौ ॥ ९
तत्राप्यधिकसंतापो विश्वामित्रो महामुनिः ।
दृष्ट्वा तेजो वसिष्ठस्य चिन्तामभिजगाम ह ।
तस्य बुद्धिरियं ह्यासीद्धर्मनित्यस्य भारत ॥ १०
इयं सरस्वती तूर्णं मत्समीपं तपोधनम् ।
आनयिष्यति वेगेन वसिष्ठं जपतां वरम् ।
इहागतं द्विजश्रेष्ठं हनिष्यामि न संशयः ॥ ११ C. 9. 2369 B. 9. 42. 12 K. 9. 43. 12

---

र्षेर्, K3 D1 s गजर्षेर्, D2 5-7 9-11 विप्रर्षेर्; G2 च स्पर्धेर् (for चैवर्षेर्) —b) D1 2 6 8 वशिष्ठस्य Ś1 °भारत B. महामन (for च भारत) —d) T1 सिद्धि- (for -स्पर्धा) T G1 3 -कर्रं (for -कृतं)

4 D3 om. 4 (cf. v. l. 1) —a) B D1 4 6 11 वशिष्ठस्य —b) K4 यत्र रात्रन्सरस्वती —c) K2 3 D4 पश्चिमे, B Dn D1-7 9-11 पार्श्वतस्, T2 4 G पृष्ठतस् (for पश्चिमस्) Ś1 K D4 M2-4 तु (for च) T2 4 G2 [आ]सि (for [आ]सीद्)

5 D3 om. 5 (cf. v. l. 1) —a) D. T2 तत्र, T4 सत्र (for यत्र) T4 स्थानु (for स्थाणुर्) K2 T2 महाराजस् —b) B1 Dn उत्तम, D-7 9 10 परम (for सुमहद्) D2 11 ततवान्सुमहातपा — G2 reads 5cd twice. —c) K4 D2 10 T4 G1 3 M तत्रास्य, T3 G2 (second time) तत्तस्य, G2 (first time) तत्राम (for यत्रास्य) T4 कतमद् (for कर्म तद्) —d) G2 प्राह्वंति (for प्रवदन्ति)

6 D3 om. 6 (cf. v. l. 1) —a) D. तत्र (for यत्र) —c) G1 (orig.) 3 ज्ञापयामास, G1 (sup. lin.) स्थाप° (for स्थाप°) T3 तीरे (for तीर्थं) —d) S (except M3) प्रभु (for प्रभो) D. स्थाणुमत्र महेश्वर

7 D3 om. 7 (cf. v. l. 1) D5 reads 7-8 on marg. —a) B (except B1) T1-2 G1 2 M3 यत्र (for तत्र) Ś1 B (except B2) D (D3 om.) तीर्थं (for सर्वे) K4 B2 4 पुरा (for सुरा) K2 4 स्कधम् — T4 om. 7b° —b) K2 D3 नराधिप, M2-4 जनाधिप (for नरा°) —c) B Dn D2 5 7 8 G1 सैनापत्येन T (T4 om.) G त स्कद (for महता) —d) T3 सुराराति (for रिवि)

8 D3 om. 8 (cf. v. l. 1) D5 reads 8 on marg. —a) K4 B D (except D1, D3 om.) T1 2 G3 M2-4 सारस्वते (for सरस्वती) —b) S महातपा (for °मुनि°) —c) B2 8 D2 5 6 11 वशिष्ट Ś1 K1 4 कल्पयामास, K2 D2 2 11 काल°, D4 चल°, T2 ताप° (for चाल°) —d) M1 तपसा वै बलादपि

9 D3 om. 9 (cf. v. l. 1) —a) B3 5 D6 8 11 वशिष्ठौ —c) T1 2 4 G2 3 M तपोन्विता (M1 °तौ), T2 तपोधिकां (for तपःकृतां) D1 तीव्र (sic) —d) T2 G2 चक्राते (for चक्रतुस्) K2 3 वै (for तौ) D1 तपस्विनौ, G3 सुयोधनौ (for तपो°)

10 D3 om. 10 (cf. v. l. 1) —a) T1 2 तस्य (for तत्र) Ś1 K1-3 B1 . Dn D1 [अ]प्यधिक- (for [अ]प्य°) B1 Dn S मतसो, D2 सतापो (for संतापो) —b) K4 महातपा —c) B5 D1-3 5 6 8 11 वशिष्ठस्य —d) Dn D5 11 M अभि, D5 अव, D7 9 10 अति (for अभि-) M स (for ह) —e) T G M1 3 च, M2 4 तु (for हि) —f) D5 धर्मनिष्ठस्य

11 D3 om. 11 (cf. v. l. 1) —a) T2 G2 येयं (for इयं) —b) D1 समीपे, D3 सपीत (sic) (for समीप) D2 8 11 तपोवनात् (for °धनम्) —c) Ś1 K1 3 मानेष्यति तु, K2 आनिष्यतित्त (sic), G2 आनयिष्यतु (for °ति) —d) D2 5 6 8 11 वशिष्ठं, S

C 9 2370 B 9 42 13 K 9 43 13

एवं निश्चित्य भगवान्विश्वामित्रो महामुनिः ।
ससार सरितां श्रेष्ठां क्रोधसंरक्तलोचनः ॥ १२
सा ध्याता मुनिना तेन व्याकुलत्वं जगाम ह ।
जज्ञे चैनं महावीर्यं महाकोपं च भामिनी ॥ १३
तत एनं वेपमाना विवर्णा प्राञ्जलिस्तदा ।
उपतस्थे मुनिवरं विश्वामित्रं सरस्वती ॥ १४
हतवीरा यथा नारी साभवद्दुःखिता भृशम् ।
ब्रूहि किं करवाणीति प्रोवाच मुनिसत्तमम् ॥ १५
तामुवाच मुनिः क्रुद्धो वसिष्ठं शीघ्रमानय ।
यावदेनं निहन्म्यद्य तच्छ्रुत्वा व्यथिता नदी ॥ १६
साञ्जलिं तु ततः कृत्वा पुण्डरीकनिभेक्षणा ।
विव्यथे सुविरूढेव लता वायुसमीरिता ॥ १७
तथागतां तु तां दृष्ट्वा वेपमानां कृताञ्जलिम् ।
विश्वामित्रोऽब्रवीत्क्रुद्धो वसिष्ठं शीघ्रमानय ॥ १८
ततो भीता सरिच्छ्रेष्ठा चिन्तयामास भारत ।
उभयोः शापयोर्भीता कथमेतद्भविष्यति ॥ १९
साभिगम्य वसिष्ठं तु इममर्थमचोदयत् ।
यदुक्ता सरितां श्रेष्ठा विश्वामित्रेण धीमता ॥ २०

---

जपत (for वसिष्ठ) Ś1 K1 जगता, K2 Dn2 D3–6 11 जयता, D1 तपता (for जपता) — e) T2 4 G2 [आ]यात, M1 [आ]हूत (for [आ]गत) T1 मुनि (for द्विज) Dn D9 वर (for श्रेष्ठ) G1 3 तमाया(G3 °यां)त नरश्रेष्ठ

12 D8 om 12 (cf v l 1) — a) T1 2 4 G M मनसा, T3 तपसा (for भगवान्) — b) Ś1 K1 4 D5 8 11 महानृपि ; K2 3 °तपा (for °मुनि) — c) T2 ससार Ś1 K1 सरित, K2 3 ता सरित् (for सरितां) — d) M1 क्रोधात्

13 D8 om 13 (cf v l 1) — a) Ś1 K1 सा ध्याता, D11 साधिता (for सा ध्याता) — c) D7 8 9 यज्ञे, D11 ययौ ; S गत्वा (for जज्ञे) Ś1 K1 4 चैव ; D8 चैन, T1–3 M चैव (for चैनं) — d) K2 D11 भासिनी, B D2 4 9 10 भाविनी (for भामिनी)

14 D8 om 14 (cf v l 1) — a) K4 D10 एवं (for एनं) Ś1 K1–3 कपमाना (for वेप°) S तदा (M1 था)त वेपमानांगी — b) D2 प्राजलिर्, T2 G1 प्राजली S भृशा (for तदा) — c) D11 उत्तस्थे (submetric) (for उपतस्थे) K4 D8 11 वरमुनिं (for मुनिवर)

15 D8 om 15 (cf v l 1) — b) Dn1 या (for सा) B1 व्यथिता (for दुःखिता) T1 2 M दुःखिता साभवद्भृश — d) D2 8 11 °पुगवं (for सत्तमम्)

16 D8 om 16 (cf v l 1) — a) D1 T1 2 तत (for मुनि) B3 4 श्रेष्ठो (for क्रुद्धो) — b) K3 B (except B1) Dn2 D2 3 5 6 11 वशिष्ठं — Ś1 K1–3 M3 om (hapl) 16c–18d — c) G3 मत्र (for अद्य)

17 D8 om. 17 (cf. v. l 1). Ś1 K1–3 M3 om 17 (cf v l 16) B1–4 Dn om 17ab — a) D1 साजलौ, D2 6–8 9 10 G1 प्राञ्जलि (for साञ्जलि) D2 11 T1 2 4 G1–3 M (M3 om) तथा T3 तथा (for ततः) — c) D2 सु विवृद्धेव, D2 सा च सुरेव, T2 सुविरूढेव — d) D2 3 11 T2 G वात (for वायु) — For 17c–19d, B Dn D1 4–10 subst 254*

18 Ś1 K1–3 M3 om 18 (cf v l 16) — c) T2 तथा (for तु तां) — d) D11 वशिष्ठं

19 a) K4 T1 2 G2 M1 भीमा — Ś1 K1–3 G2 om (hapl) 19c–20d — c) T3 विप्रयोर् (for शापयोर्) T1 उभयो शापभीता सा — For 17c–19d, B Dn D1 4–10 subst D2 ins lines 5–6 only after 19

254* प्राकम्पत भृशं भीता वायुनेवाहता लता ।
तथारूपां तु तां दृष्ट्वा मुनिराह महानदीम् ।
अविचारं वसिष्ठं त्वमानयस्वान्तिकं मम ।
सा तस्य वचनं श्रुत्वा ज्ञात्वा पापं चिकीर्षितम् ।
वसिष्ठस्य प्रभावं च जानन्त्यप्रतिमं भुवि । [5]

[ D3 om up to प्रभावं च (in line 5) (cf v l 1) — (L 1) B3 Dn1 D1 6 हता, D4 महा (for [आ]हता) — (L 2) D10 तथागतां (for °रूपां) — (L 3) B2 D 6 वसिष्ठ D5 ममान्तिकं (by transp) — (L 4) D 6 transp श्रुत्वा and ज्ञात्वा D2 [उ]पाय (for पाप) — (L 5) B3 4 5 D5 वसिष्ठस्य ]

20 Ś1 K1–3 G2 om 20 (cf v l 19) — a) T2 आभि (for साभि) K4 B1 2 Dn D2 3 11 वसि (D2 3 °शि)ष्ठं सं, B3 4 D1 6 7 9 10 वसि(B3 D6 °शि)ष्ठं च, D4 5 8 वसि(D4 °शि)ष्ठस्य (for वसिष्ठं तु) — b) B2–4 Dn1 D4–7 9 10 T1 G1 इदम् (for इमम्) D1 वाक्यम् (for अर्थम्) D1–3 5 11 अनोदयत् ; M अभि-

उभयोः शापयोर्भीता वेपमाना पुनः पुनः ।
चिन्तयित्वा महाशापमृषिवित्रासिता भृशम् ॥ २१
ता कृशां च विवर्णां च दृष्ट्वा चिन्तासमन्विताम् ।
उवाच राजन्धर्मात्मा वसिष्ठो द्विपदां वरः ॥ २२
त्राह्यात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनी ।
विश्वामित्रः शपेद्धि त्वां मा कृथास्त्वं विचारणाम् ॥ २३
तस्य तद्वचनं श्रुत्वा कृपाशीलस्य सा सरित् ।
चिन्तयामास कौरव्य किं कृतं सुकृतं भवेत् ॥ २४
तस्याश्चिन्ता समुत्पन्ना वसिष्ठो मय्यतीव हि ।
कृतवान्हि दयां नित्यं तस्य कार्यं हितं मया ॥ २५

अथ कूले स्वके राजञ्जपन्तमृषिसत्तमम् ।
जुह्वानं कौशिकं प्रेक्ष्य सरस्वत्यभ्यचिन्तयत् ॥ २६
इदमन्तरमित्येव ततः सा सरितां वरा ।
कूलापहारमकरोत्स्वेन वेगेन सा सरित् ॥ २७
तेन कूलापहारेण मैत्रावरुणिरौह्यत ।
उह्यमानश्च तुष्टाव तदा राजन्सरस्वतीम् ॥ २८
पितामहस्य सरसः प्रवृत्तासि सरस्वति ।
व्याप्तं चेदं जगत्सर्वं तवैवाम्भोभिरुत्तमैः ॥ २९
त्वमेवाकाशगा देवि मेघेषूत्सृजसे पयः ।
सर्वाश्चापस्त्वमेवेति त्वत्तो वयमधीमहे ॥ ३०　C 9 2318 B 9 42. 31 K. 9 43 31

---

तयत् ( for अचोद° ) —c) D4 10 T G ( G2 om ) उक्त ( for उक्ता ) D8 सरितश्रेष्ठा ( sic )

21 a) K3 शापयोर् —b) D3 11 मुहुर्मुहु ( for पुन पुन ) —c) T3 तथा, T4 G तदा ( for महा ) —d) G1. 3 ऋष्योर्, M3 4 हृदा, M3 हृदि ( for ऋषि- ) K2 3 सती ( for भृशम् ) D5 ऋषिभिर्भ्रा समभृद्भृशा ( hypermetric ), D8 ऋषिणा विभिना भृशा ( sic ), T1 2 ऋषिभ्यां त्रासिता भृशं, T4 ऋष्योर्वै दु स्थिता भृशा

22 a) D9 स ता कृशा ( for ता कृशा च ) B4 तु ( for the second च ) —d) K3 B2 4 5 D2 3 6 11 वशिष्ठो D7 भगवान् ( for द्विपदा ) D3 वर S वसिष्ठ. सुमहातपा

23 Before 23, N ins वसिष्ठ उवाच —a) K1 4 B Dn D1. 4 6–10 पाहि ( for त्राहि ) —b) D3 वहु ( for वह ) K2 M2 4 मा ( for मा ) Ś1 K1 4 B5 D5 7–9 -गामिनि —c) K4 D3 M1. 3 4 हि त्वा, D6 त्वा हि ( by transp ) —d) K3 Dn D3 11 विचारणं

24 b) S ( except M3 ) वै ( for सा ) —d) B D किं कृत्वा, T G कृत्वा किं, M कृतं किं ( by transp )

25 a) G1 तस्या ( for तस्याश् ) —b) B4 D2 3. 5 6 11 वशिष्ठो Ś1 K1–3 ह ( for हि ) M1 वसिष्ठो महती मयि —c) G1. 3 ऋषिर् ( hypermetric ) ( for हि ) Ś1 K1–3 D2 3 अद्य, K4 मह्य, D11 मेध ( for नित्य ) G2 कृतवान्हितमत्यतं —d) D5 यया ( for मया )

26 a) K1 कूलेंवके ( sic ), D2 6 कूळे ( D6 कुले ) स्वके —b) D1 तपतम् ( for जपन्तम् ) —c) T4 जुह्वत M अभिस ( for कौशिक ) D5 प्रेप्य, T G दृष्ट्वा ( for प्रेक्ष्य ) —d) K3 4 D2 6–9 11 S ( except M1 3 ) अभि( K3 T3 वि, D7 °प्य, D9 पि )चिंतयत्, D3 अन्वापिंचयत्

27 a) Ś1 K1–3 B2 D4 6 7 9 10 [ए]व —c) D2 कूळापहारम्, D3 6 T1 कुलाप°, G1 कूलापमागम् —d) Ś1 K1–3 वै तदा, S भारत ( for सा सरित् )

28 a) D2 3 कूलो( D2 °ळा )पहारेण T1. 2 कू( T1 कु )लापहारिणा तेन —b) B2 Dn2 मित्रावरुणिर् Ś1 K1 सौह्यते, K4 S ( except M1 4 ) ऊह्यत ( for औं° ) —c) D9 T1 M3 4 ऊह्यमान B1 3 4 Dn D1 4–8 10 स, D9 सु-, D11 om. ( for च ) —d) T3 तथा ( for तदा )

29 Before 29, G2 ins वसिष्ठ. —a) D3 शिरस —b) T3 प्रवृद्दा M3 सा ( for [अ]सि ) B1 4 Dn D1 5 7 11 T G M3 सरस्वती —c) T3 4 चैव, M1 एव ( for चेदं ) Dn कृत्स्नं ( for सर्वं ) —d) K3 T3 तथा ( for तव ) M3 च ( for [ए]व ) G1 3 पृथिव्याभोभिरुत्तमै ( G3 °मे )

30 a) D7 8 आकाशगे T1–3 G1 देवी —b) K2 3 त्वमेव, T3 मखेषु, G2 मेघौघात् ( for मेघेषु ) B D10 11 G2 सृजसे ( D11 °ते ), D3 [उ]त्सृजसि ( for °से ) —c) D6 T3 G2 3 तु ( for च ) —d) T1. 4 G यथा, M ततो ( for त्वत्तो ) K2 4 B1–4 Dn D1 4 6–10 T4 अधीमहि, G3 अयामहे, M2 अरीमहे ( sic ) ( for अधी ) D5 त्वत्तोस्यमनधीमहि ( sic ), T2 3 यथावदवसीमहे ( T3 °मिधीयते )

31 a) D3 T3 4 G1. 3 M2–4 तुष्टि ; T1 ऋद्धि ; T2

C 9 2329 B 9 42. 32 K 9 43 32 पुष्टिर्धृतिस्तथा कीर्तिः सिद्धिर्वृद्धिरुमा तथा ।
त्वमेव वाणी स्वाहा त्वं त्वय्यायत्तमिदं जगत् ।
त्वमेव सर्वभूतेषु वससीह चतुर्विधा ॥ ३१
एवं सरस्वती राजन्स्तूयमाना महर्षिणा ।
वेगेनोवाह तं विप्रं विश्वामित्राश्रमं प्रति ।
न्यवेदयत चाभीक्ष्णं विश्वामित्राय तं मुनिम् ॥ ३२
तमानीतं सरस्वत्या दृष्ट्वा कोपसमन्वितः ।
अथान्वेषत्प्रहरणं वसिष्ठान्तकरं तदा ॥ ३३
तं तु क्रुद्धमभिप्रेक्ष्य ब्रह्महत्याभयान्नदी ।
अपोवाह वसिष्ठं तु प्राचीं दिशमतन्द्रिता ।
उभयोः कुर्वती वाक्यं वञ्चयित्वा तु गाधिजम् ॥ ३४
ततोऽपवाहितं दृष्ट्वा वसिष्ठमृषिसत्तमम् ।
अब्रवीदथ संक्रुद्धो विश्वामित्रो ह्यमर्षणः ॥ ३५
यस्मान्मा त्वं सरिच्छ्रेष्ठे वञ्चयित्वा पुनर्गता ।
शोणितं वह कल्याणि रक्षोग्रामणिसंमतम् ॥ ३६
ततः सरस्वती शप्ता विश्वामित्रेण धीमता ।

---

त्रुद्धि, G2 वृद्धि (for पुष्टिर्) D1 तुष्टिस्, D2 8 11 M ऋद्धिस्, T G पुष्टिस् (for धृतिस्) M3 om (hapl) from स्तथा up to सिद्धि (in $31^{b}$) M1 तदा (for तथा) — $^{b}$) Ś1 K1 2 D2 8 7 सिद्धि (for सिद्धिर्) Ś1 K1 2 वृतिर्, K6 धृतिर्, K4 सिद्धिर्, B Dn D1 4 5 7–10 त्रुद्धिर्, D8 रुद्धिर् (sic), G3 ह्रीर्धीर् (for वृद्धिर्) B5 उपा तथा, T1 2 G2 य(G2 त)था तथा, T3 4 G1 3 M अनुत्तमा (for उमा तथा) D6 धृतिस्तु सिद्धिरुत्तमा — $^{c}$) M1 तथा त्वमेव (hypermetric) (for त्वमेव) D8 वेणी (for वाणी) T1 2 M transp स्वाहा and त्व D8 त्वमेव तु सर्वमेव, T3. 4 G2 3 त्वमेव वारुणी स्वाहा — $^{d}$) K4 B Dn D1–3 5–7 9 10 तवायत्तम्, D4 एव तद् (submetric), D8 त्वमेव तु, D10 तथायत्तम्, T2 त्वया, T3 M त्वदा° (for त्वय्या°) — $^{e}$) G2 लोकेषु (for -भूतेषु) G1 3 त्वमेव सर्वमेवैषु — $^{f}$) D5 वसता हि, G1 3 वस(G3 °य)सीव (for °ह)

32 $^{b}$) K2 D1–3 स्तूयमाणा (sic) S स्तुता तेन महात्मना (T2 °हर्षिणा) — $^{c}$) T3 G1 3 फेनिला (for वेगेन) Ś1 K1 [ए]वाहत, K2 3 [ए]व हृत, G2 चावहद्, M3 [उ]पगत (for [उ]वाह त) D3 सर्वं, D4 पूर्वं, M1 om (for विप्र) T4 फेनलोलहृत विप्र — $^{e}$) D1 चामीथा (sic), D8 चाक्षीण, T4 वोभीक्ष्ण, G3 सा° (for चा°) D2 8 11 न्यवेदयत्तदाभी(D2 °थाभी, D8 °दा ती)क्ष्ण, M1 न्यवेदयच्च साभीक्ष्ण — $^{f}$) M1 वै (for त) K1 विश्वामित्रायुत मुनिं (sic)

33 $^{a}$) Ś1 K1 3 उपानीत, K2 उपासीन (for तमानीत) — After $33^{b}$, D2 8. 11 ins

255* अक्रोधत समुत्तिष्ठद्विश्वामित्रो मुनिं प्रति ।
त गृहीतायुध दृष्ट्वा वसिष्ठान्तकर मुनिम् ।
कौशिक सुमहत्क्रुद्ध कालमृत्युमिवापरम् ।

[(L 1) D8 [ऽ]पि त मुनिं (for मुनिं प्रति) —(L 2) D3 उग्रमायुध (for गृहीता°). MSS वशिष्ठान्त D2 तदा (for मुनिम्) —(L 3) D2 सुमहा D2 काल (for काल)]

— $^{c}$) Ś1 K1–3 अन्वियेष, B1 M1 अथान्वैषत्, B3 तथा न्वेषात्, D2 अथान्वेषान्, D3 11 °न्वे(D3 °न्वै)ष्य, D8 °न्वैछत्; T2 °न्वेष (for °न्वेषत्) — $^{d}$) K2 corrupt B2 5 D8 6 11 वशिष्ठात D1 T4 करस् (for -कर) K4 D5 तथा, T2 सदा (for तदा)

34 $^{a}$) T1 2 च (for तु) D3 अभिप्रेप्स्य (for °प्रेक्ष्य) — $^{b}$) K4 B Dn D1 4–7 9 10 T1 G1 M2–4 ब्रह्मवध्या Ś1 K1–3 निशि, Dn2 तदा (for नदी) T3 ब्रह्महत्या महानदी — $^{c}$) G3 अथोवाह (for अपो°) K3 B2 4 D1 3 5 6 11 वशिष्ठ Ś1 K Dn D1. 3 4 8 11 T3 G2 त (for तु) — $^{d}$) D1 5 8 प्राची- D11 दिशि (for दिशम्) K3 असमन्त्रिता, B2 Dn अनिन्दिता (for अत न्द्रिता) — $^{f}$) B D (except Dn) T1 2 4 G2 3 च, G1 [अ]थ (for तु)

35 $^{a}$) T1 3 4 G तथा (for ततो) D5 [ऽ]त्यावि हीत (sic), T3 [उ]पवाहित (for ऽपवा°) — $^{b}$) D2 3 5 6 11 वशिष्ठम् T3 G1 -सत्तम — $^{c}$) K4 B4 5 Dn D4 8 त्वथ, B3 D1 5–7 9 10 T4 दु ख (for अथ) K3 जुह्वान कौशिकं प्रेक्ष्य (sic) (= $26^{c}$), T3 अब्रवी त्क्रोधसंयुक्तो — $^{d}$) Ś1 K1–3 [ऽ]त्य(K2 °भ्य)मर्षण, K4 त्वम°, S सरस्वतीं (for ह्यमर्षण)

36 $^{a}$) K2–4 B Dn D1–4 6–11 T3 G2 3 मा D5 त्व मा (for मा त्व) T1. 2 यस्मात्त्व सरितां श्रेष्ठे, T4 समाजा त्व सरिच्छ्रेष्ठे (sic) — D5 reads $36^{c}$–$37^{b}$ on marg — $^{c}$) M3 रुधिरं (for शोणित) D3. 8 कल्याणी — D6 om $36^{d}$–$37^{c}$ K3 reads $36^{d}$–$37^{b}$ on marg — $^{d}$) Ś1 K1–3 समित, K4 -सयुत, D2 8 11 संमता, M1 संवृता (for समतम्) T1 2 4

अवहच्छोणितोन्मिश्रं तोयं संवत्सरं तदा ॥ ३७
अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तथा ।
सरस्वतीं तथा दृष्ट्वा बभूवुर्भृशदुःखिताः ॥ ३८
एवं वसिष्ठापवाहो लोके ख्यातो जनाधिप ।
आगच्छच्च पुनर्मार्गं स्वमेव सरितां वरा ॥ ३९

इति श्रीमहाभारते शल्यपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

# ४२

वैशंपायन उवाच ।
सा शप्ता तेन क्रुद्धेन विश्वामित्रेण धीमता ।
तस्मिंस्तीर्थवरे शुभ्रे शोणितं समुपावहत् ॥ १
अथाजग्मुस्ततो राजन्राक्षसास्तत्र भारत ।
तत्र ते शोणितं सर्वे पिबन्तः सुखमासते ॥ २
तृप्ताश्च सुभृशं तेन सुखिता विगतज्वराः ।
नृत्यन्तश्च हसन्तश्च यथा स्वर्गजितस्तथा ॥ ३
कस्यचित्त्वथ कालस्य ऋषयः सतपोधनाः । C 9 2403 B 9 43 4 K 9 44 4

G राक्षमाना च ममत, T3 राक्षमाना महात्मना

37 D5 om 37^a^b^? (cf v 1 36) K3 D5 read 37^ab on marg —^a) T3 4 G2 3 तथा (for तत) —^b) K2 corrupt —Ś1 K1-3 om. (hapl) from 37^c up to 9 42 1^b —^c) M1 अभवत् (for अवहत्) T4 G2 3 शोणितैर्मि(G3 त मि)श्र —^d) D5 तथा (for तदा)

38 Ś1 K1-3 om 38 (cf v 1 37) —^a) D1 corrupt M ऋषयश्चात्र देवाश्च —^b) B1 2 D1 6-7 9 10 T3 तदा (for तथा) —^c) D1 T4 G M3 4 तदा (for तथा) —^d) B दुदुवुर् (for बभूवुर्) D5 बभूवुर्दुःखिता भृश

39 Ś1 K1-3 om 39 (cf v 1 37) —^a) B2 4 D1 2 . 6 11 वशिष्ठापवाहो, T G वसिष्ठोपहृत (G1 हृता, G3 °हृता), M वसिष्ठा(M2 4 °ष्ठो)पवाह —^b) K4 D2 शीघ्र ख्यातो, D- लोके ख्याता, T G शीघ्राख्यातो, M शीघ्र कृत्वा (for लोके ख्यातो) Dn D11 नराधिप —^c) B5 D1 2 11 आगच्छत, Dn D7 10 T1 G1 3 M अगच्छच्च, G2 अगच्छत (for आगच्छच्च) T1 2 G M ततो, T3 तथा (for पुनर्) T4 अगच्छच्छवशो मार्गं —^d) M3 तम् (for स्वम्)

Colophon om in Ś1 K1-3 —*Sub parvan* K4 B2 4 D1. 7 9 10 हलधरतीर्थयात्रा, B1 3 Dn T1 2 M2 4 रामतीर्थयात्रा, B5 D2-6 8 11 बलदेवतीर्थयात्रा, M1 तीर्थयात्रा, Cal. Bom ed गदा(Cal ed गदायुद्ध)पर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्यान, Kumbh. ed हृदप्रवेश —*Adhy name* T1. 2 M2 4 सरस्वतीशाप —*Adhy no* (figures, words or both) B2 23, B4 G3 43, Dn1 D9 10 13, Dn2 12, D7 11, T G1 2 M 44 —*Śloka no* Dn 40, D7 9 41

## 42

1 Ś1 K1-3 om 1^ab (cf. v 1 9 41 37) —^a) K4 D2 3 11 शप्ता तेन च (K4 तु) क्रुद्धेन, M1 क्रुद्धेन तेन सशप्ता —^c) K3 reads from तस्मिं up to शोणितं (in 1^d) on marg D8 अस्मिंस् (for त°) D3. 4 9. 10 तीर्थे (for तीर्थ) D2 11 पुण्ये, T3 4 G शुद्धे (for शुभ्रे) —^d) T3 समुपाहरत्, G1 M1 उपावहत् (for पावहत्)

2 ^a) K3 om , T3 G2 तदा, T4 G3 तथा (for अथ) B1 M2 जग्मुस् (for [आ]जग्मुस्) K4 वेगिता (hypermetric), T3 तथो (for ततो) Ś1 K1 2 D2 3. 11 आजग्मु सर्वतो (D2. 3. 11 स्सुर्वेगिता) राजन् —^b) T1 2 M2-4 तत्र ह (for भारत) D6 राक्षसा रुधिराशिन —^c) D8 ते तत्र (by transp), S (except G2 3) ततस्ते D2 3 6 11 सर्वे (for सर्वे) —^d) K4 सेवंत (for पिबन्त) D5 सुपम् D11 आसत (for °ते) S पिबंत समुपासते

3 ^a) T3 शप्ताश्च (sic) (for तृप्ताश्च) B4 स्व*, G2 लघु (for च सु) —^b) K4 D5 सुपिता, B4 दुःखिता, Dn1 S (except T3) सुखिनो (for ता) —^d) K2 यथा स्वर्गमुपासते, S °र्गगतो (M1 °ता) नर

4 ^a) D2 कालस्य —^b) G3 सर्षय K4 B Dn

C 9 2403 B 9 43. 4 K 9 44 4 तीर्थयात्रां समाजग्मुः सरस्वत्यां महीपते ॥ ४
तेषु सर्वेषु तीर्थेषु आप्लुत्य मुनिपुंगवाः ।
प्राप्य प्रीतिं परां चापि तपोलुब्धा विशारदाः ।
प्रययुर्हि ततो राजन्येन तीर्थं हि तत्तथा ॥ ५
अथागम्य महाभागास्तत्तीर्थं दारुणं तदा ।
दृष्ट्वा तोयं सरस्वत्याः शोणितेन परिप्लुतम् ।
पीयमानं च रक्षोभिर्बहुभिर्नृपसत्तम ॥ ६
तान्दृष्ट्वा राक्षसान्राजन्मुनयः संशितव्रताः ।
परित्राणे सरस्वत्याः परं यत्नं प्रचक्रिरे ॥ ७
ते तु सर्वे महाभागाः समागम्य महाव्रताः ।
आहूय सरितां श्रेष्ठामिदं वचनमब्रुवन् ॥ ८
कारणं ब्रूहि कल्याणि किमर्थं ते ह्रदो ह्ययम् ।
एवमाकुलतां यातः श्रुत्वा पास्यामहे वयम् ॥ ९
ततः सा सर्वमाचष्ट यथावृत्तं प्रवेपती ।
दुःखितामथ तां दृष्ट्वा त ऊचुर्वै तपोधनाः ॥ १०
कारणं श्रुतमस्माभिः शापश्चैव श्रुतोऽनघे ।
करिष्यन्ति तु यत्प्राप्तं सर्व एव तपोधनाः ॥ ११
एवमुक्त्वा सरिच्छ्रेष्ठामूचुस्तेऽथ परस्परम् ।

D2 3 6 7 9–11 T2 M1 3 सु, D1 4 5 8 M2 4 च, T3 G2 तु (for स) — [c]) D5 उपाजग्मु (for समा°) — [d]) T2–4 G1 3 ऋषय (T3 ऋषिं त) समुपासते

5 [a]) D9 ते तु, G3 पृषु (for तेषु) T3 4 चाप्लुत्य (for तीर्थेषु) — [b]) Ś1 K1–3 B1 Dn D8 स्वाप्लुत्य, B3 5 6 D4 6 7 9 10 स्वा°, T3 चाजग्मुर्, T4 आजग्मुर्, G1 वाप्लुत्य, G2 चा° (for आ°) — [c]) Ś1 K1–3 प्राप्य प्रीतिं, T1 2 M2–4 प्रीतिं प्रा(T1 2 M3 चा)प्य (by transp) — [d]) D4 9 ततो (for तपो) T3 4 G विशां पते (for विशारदा) — [e]) D1 अथाजग्मुस् (for प्रययुर्हि) — [f]) K4 T1 G1 3 M तु तत्, T2 3 G2 ततस्, T4 कृत (for हि तत्) K2–4 T4 G2 M तदा B D येन (D8 6 11 यत्र, D3 पेतु [sic]) तीर्थमसृग्वह (D2 °हा)

6 [a]) K2 [आ]गत्य, G1 3 [आ]गमन् (for [आ]गम्य) T1–3 G1. 3 महाभाग, T4 °राज (for °भागास्) — [b]) M1 त (for तत्) K2 तीर्थे K4 D2 3 11 S प्रभो (for तदा) — B1 D7 om (hapl) 6[d]–7[c] — [d]) D3 सलिलेन (for शोणितेन) K2 D3 परिप्लुत, D3 °प्लुता; D11 °प्लुता, T2 समुत्थित, T3 G1 3 समाश्रित, G2 सुमिश्रित; M समुक्षित (for परिप्लुतम्) — [e]) D3 रक्षसोभिर् (sic) (for च रक्षोभिर्) — [f]) D2 11 S राज (for नृप) Ś1 K समागम्य (K2 °त्य) महाव्रता (K1 °श्या) (= 8[b])

7 B4 D7 om 7[abc] (of v l 6) K3 om (hapl) 7[a]–8[b] — [a]) D2 सर्वान् (for राजन्) — [b]) Dn1 D3 3 11 T2 शंसित, D2 6 शासित (for संशित) —T3 4 om (hapl) 7[c]–8[b], D5 reads it on marg — [d]) D11 प्रचक्रमे (for °क्रिरे)

8 K3 T3 4 om 8[ab] (cf. v l. 7), D5 reads it on marg — [ab]) G ता (for ते) M3 transp महाभागा and समागम्य D. महात्मान (for °भागा) D1 8 समागत्य (for °गम्य) — [d]) D3 reads from वचन up to तत सा (in 10[c]) on marg Dn D11 अब्रवीत् (for अब्रुवन्)

9 D3 reads 9 on marg — [a]) T3 G1 3 वद, T4 वत (for ब्रूहि) — [b]) G1 corrupt. D8 स (for ते) — [c]) D2 आकुलता, T1 3 4 G अप्रा(T3 °प्र)प्ता, T2 आकुलिता (for °लता) K2 T2 G1 याता, D1 जात, T3 याति, M3 यात्वा (for यात) — [d]) K3 T3 यास्या महे, K4 ज्यास्या°, B Dn2 D1 T1 2 4 G M1 प्यास्या°, Dn1 ध्याया°, D2 11 चरस्या°, D3–7 9 10 ज्ञास्या°, M3 [उ]पास्या°, M4 वेत्स्या° (for पास्या°) D8 श्रद्दधास्यामहे वयं

10 D3 reads तत सा on marg — [a]) D2 3 आचष्टे, D3 आचछे (sic), D11 आचक्ष (for °ष्ट) — [b]) K2 3 महीपते, T4 प्रवेपिनी (for °पती) D2 वेपमाना सरस्वती — [c]) D5 दुःपिताम् G2 ता तथा (for अथ ता) B5 M ज्ञात्वा (for दृष्ट्वा) — [d]) K4 B D ऊचुस्ते (D2 °श्च) (by transp), T2 वदोचुर्, G3 तामूचुर् B1 ता, D2 [ए]ते; D3 [ऽ]ति (for वै)

11 K4 om 11[a]–12[b] — [b]) M3 पूर्वं B5 सरिद्वरे (for श्रुतोऽनघे) T3 4 G1 2 शा(T3 को)पश्चापि तवानघे — [c]) T G करिष्यामस् (for °ष्यन्ति) D5 तत् (for यत्) D2 3 9 11 करिष्यामो वयं पूजा (D9 यत्न), M1 तत्करिष्यति यत्प्राप्तं

12 K4 om 12[ab] (cf. v l 11) — [b]) D2 11 वै, T4 G1 3 च (for ऽथ) — [c]) D3 T1 2 4 G M2–4 विमोक्षयामहे सर्वे, T3 विनिमोक्ष्या°, M1 मोक्षयाम सरि°

विमोचयामहे सर्वे शापादेतां सरस्वतीम् ॥ १२
तेषां तु वचनादेव प्रकृतिस्था सरस्वती ।
प्रसन्नसलिला जज्ञे यथा पूर्वं तथैव हि ।
विमुक्ता च सरिच्छ्रेष्ठा विबभौ सा यथा पुरा ॥ १३
दृष्ट्वा तोयं सरस्वत्या मुनिभिस्तैस्तथा कृतम् ।
कृताञ्जलीस्ततो राजन्राक्षसाः क्षुधयार्दिताः ।
ऊचुस्तान्वै मुनीन्सर्वान्कृपायुक्तान्पुनः पुनः ॥ १४

वयं हि क्षुधितार्श्चैव धर्माद्धीनाश्च शाश्वतात् ।
न च नः कामकारोऽयं यद्वयं पापकारिणः ॥ १५
युष्माकं चाप्रसादेन दुष्कृतेन च कर्मणा ।
पक्षोऽयं वर्धतेऽस्माकं यतः स्म ब्रह्मराक्षसाः ॥ १६
एवं हि वैश्यशूद्राणां क्षत्रियाणां तथैव च ।
ये ब्राह्मणान्प्रद्विषन्ति ते भवन्तीह राक्षसाः ॥ १७ C 9 24 B 9 41 K 9 44
आचार्यमृत्विजं चैव गुरुं वृद्धजनं तथा ।

---

श्रेष्ठा — d) K4 B2 5 D2 8 11 T1. 2. 4 G M2-4 पुनां, D1 देवीं (for पुरा) — After 12, B D ins

256* ते सर्वे ब्राह्मणा राजंस्तपोभिर्नियमैस्तथा ।
उपवासैश्च विविधैर्यमैः कष्टव्रतैस्तथा ।
आराध्य पशुभर्तारं महादेवं जगत्पतिम् ।
मोक्षयामासुरुत्तां देवीं सरिच्छ्रेष्ठां सरस्वतीम् ।

[ (L. 1) D ये (for ते) B. राक्षसा (for ब्राह्मणा) — D reads line two twice — (L 2) D5 (both times) उपवासैश् (for °वासैश्) D2 नियमैर् (for विविधैर्) D. धर्मै (for यमैः) D2 8 11 अपि (for तथा) D. (second time) महेशोमानन्दरा (for the post half) — (L. 4) D2 8 11 तां देवीं मोक्षयामासुः (for the prior half) ]

13 K4 S om. (hapl) $13^{ab}$ — a) B D (except D2) तेषां तु सा प्रभावेन (B2. 3 D. °ण) — K2 om $13^{cd}$ — c) T G [अ]भून्न (for जज्ञे) D2 11 M3 प्रसन्न सलिल जज्ञे — d) K4 D2 M-4 [ए]व ह (K4 च), D2 च हि, G2 वह (for [ए]व हि) — After $13^{d}$, T G ins

257* एवमुक्त्वा च मुनयो दुःखार्चेता व्यमोचयन् ।

[ T1. 2 तु, T3 G2 [अ]थ (for च) G1 3 विमोचयन् ]

— e) K4 D10 निर्मुक्ता (for विमुक्ता) Ś1 K1-3 D2 8 11 सा, M1 [अ]थ (for च) T G मुक्ता च (T3 विमुक्ता, T4 G2 युक्ता च, G3 मुक्ता तु) सरितां श्रेष्ठा — f) Ś1 K1 2 D- 8 11 च, K4 om (for सा) M1 विबभूव यथा पुरा

14 a) K3 D3 सरस्वत्या — b) G1 मुनिहस्तैस् (for °भिस्तैस्) K4 तथागत, B2 यथाकृत — After $14^{b}$, N ins

258* तानेव शरणं जग्मू राक्षसा क्षुधितास्तथा ।

[ D2 तोयेन (for तानेव) Dn क्षुभिता (for क्षुधितास्) Ś1 K1-3 Dn तदा, D11 मृड (for तथा) D2 राक्षसास्ते क्षुधार्दिता (for the post half) ]

— c) K2-4 D2 11 कृत्वाञ्जलिं (K2 °लीस्, D2 °ळीस्), D1 8 बद्धाञ्जलिं (for कृताञ्जलीस्) D5 S कृताञ्जलिपुटा राजन् (D3 °टास्ते तु) — d) B1 D7 9 10 क्षुधितार्दिता, D2 क्षुधितास्तदा S शिरोभि प्रणिपत्य च — ef) D2 G3 transp मुनीन्सर्वान् and कृपायुक्तान् D6 ऋषीन् (for मुनीन्) T3 राजन् (for सर्वान्) Ś1 K1. 2 M2 -युक्ता, M3 -विष्टान् (for युक्तान्) Dn1 om (hapl) the second पुन

15 Before 15, T G ins राक्षसा — a) T8 om वयं K3 D6-8. 10 T4 च, T1 2 तु, T8 om. (for हि) Dn क्षुभिताश् D5 वय सर्वे हि क्षुधिता — b) K2 D2 8 11 T2 4 G धर्मार्थिताश् (D11 ताश्), K3 हीनाच, Dn1 D7 8 T2 धीनाश्, M2 धीनाश्, M3 र्थिनश (sic) (for °द्धीनाश्) D11 om च K3 D7 8 11 M2 3 4 (also as in text) शाश्वतान् — c) D1 च वै, D2 च तत्, D3 वस्तत् (sic), Cv च न (as in text) — d) M1 वय यत् (by transp) K4 damaged, D1 काम- (for पाप)

16 a) D2 M1 तु, M3 वा (for च) Ś1 K D (except Dn) T4 G M1. 2 प्रसादेन (for [अ]प्रसा°) — b) D8 सुकृतेन (for दुष्कृ°) D5 पूर्वकर्मविपाकत — c) K2 पापोयं, K3 यत्क्षय, B D यत्पाप (for पक्षोऽयं) — d) B5 तत, D5 येन, T G यथा (for यत) B Dn D1. 3. 4. 6-10 Cv स्मो, D5 वै, S स्युर् (for स्म) — After 16, B D (except D2 8 11) read $18^{ef}$

17 B1 om. (hapl) 17 G1 M1 3 om (hapl) $17^{a}$–$18^{d}$ — a) D4 ह (for हि) D8 ब्रय (for वैश्य-) D3 एव हि शूद्रवैश्याना — c) K4 प्रद्विषते, D11 प्रविद्विषति (hypermetric), T1-3 विद्विषति (for प्र°)

C 9 2422
B 9 43 23
K 9 44 23

प्राणिनो येऽवमन्यन्ते ते भवन्तीह राक्षसाः ।
योषिता चैव पापानां योनिदोषेण वर्धते ॥ १८
तत्कुरुध्वमिहास्माकं कारुण्यं द्विजसत्तमाः ।
शक्ता भवन्तः सर्वेषां लोकानामपि तारणे ॥ १९
तेषां ते मुनयः श्रुत्वा तुष्टुवुस्तां महानदीम् ।
मोक्षार्थं रक्षसां तेषामूचुः प्रयतमानसाः ॥ २०
क्षुतकीटावपन्नं च यच्चोच्छिष्टाशितं भवेत् ।
केशावपन्नमाधूतमारुग्णमपि यद्भवेत् ।
श्वभिः संस्पृष्टमन्नं च भागोऽसौ रक्षसामिह ॥ २१
तस्माज्ज्ञात्वा सदा विद्वानेतान्यन्नानि वर्जयेत् ।
राक्षसानामसौ भुङ्क्ते यो भुङ्क्ते ह्यन्नमीदृशम् ॥ २२
शोधयित्वा ततस्तीर्थमृषयस्ते तपोधनाः ।
मोक्षार्थं राक्षसानां च नदीं तां प्रत्यचोदयन् ॥ २३
महर्षीणां मतं ज्ञात्वा ततः सा सरितां वरा ।

---

18 G1 M1 2 om. 18[abcd] (cf v l 17) Ś1 K1-3 T4 M3 4 om (hapl) 18[abcd] —[a]) D2 3 5 11 T3 ऋत्विजश्च T1 3 G2 3 आचार्यानृत्विजश्चैव —[b]) D1-7 9 11 T2 G3 गुरु, T1 2 गुरून् D2 3 11 T1 2 G2 वृद्ध जनान् —[c]) T1 3 G2 3 येवमन्य( T2 °मस्य )ति पुर पास् —[d]) T1 हि (for [इ]ह) — B D (except D2 3 11) read 18[ef] after 16 —[e]) Ś1 K1-3 योषितश् B1-6 Dn D1 4-10 T4 G2 पापेन (for पापाना) —[f]) Ś1 K1 योनिर् (for योनि) K4 -दोषाच्च (for दोषेण) T3 वर्धते B1-6 Dn D1 4-10 योनिदोषकृतेन च — After 18, S ins

250* पक्षोऽस्माकमृषिश्रेष्ठा यदत्रानन्तर क्षमम् ।

[ T2 पक्षे T3 इति (for ऋषि) T3 4 क्षय (for क्षमम्) G2 यदत्रानन्तरम्भव (for the post half) ]

19 [a]) K4 दामाग्मान (sic) (for इहास्माक) —[b]) B1 2 4 6 Dn D1 4-10 तारण, B3 T2-4 G1 3 M3 कारण (for कारुण्य) T4 मुनि (for द्विज) —[c]) T2 3 G2 M3-4 सर्वेऽपि, T4 सर्वे हि, G1 3 सर्वे च (for सर्वेषा) —[d]) T2 अत्र (for अपि) T3 4 कारणे

20 [a]) S तेभ्य (for तेषा) B5 D2 4-7 9 10 M2 4 सु, T1 2 अपि, T3 M1 मद्, T4 G तम् (for ते) B1 D4 5 वचनं, S ऋषय (for मुनय) Dn तुष्टास् (for श्रुत्वा) —[d]) Dn प्रत्यय, T3 G1 मुदित (for प्रयत) T4 ऊचुर् मुनयस्तदा

21 Before 21, T G ins ऋषय —[a]) K3 D1 5 G1 हतं, K4 B Dn D4 6 10 11 T1 2 G1 3 M1 क्षुतं; D3 श्रुत, D8 सुत, T3 क्षत, T4 क्षुर, Cv (gloss: शब्दं निमर्गमित्यर्थं) दुतं (for क्षुत) D8 G2 कीटोप (for -कीटाव) D2 कीटावपन्नमद यद् —[b]) K4 यथा (for यच्च) K4 B1-3 5 Dn D1-10 S [उ]च्छिष्टाचि (D2 °न्वि, T G °श्रि; M °त्रि)त, D2 °ष्टमिषं, D8 11 [ट]ोग्मिष्टामिषं (D3 °सं) (for °ष्टाशित) D2 भजन B4 य॰च्छिष्टाचितं भवेत्, D1 यच्चोष्ट्रा विकृत भवेत् — K4 om (hapl) 21[cd] —[cd]) G2 केशोपपन्नम् K1 आहूतम्, K3 औधूतम् (for आ°) D2 8 11 अनु ग्णम् (for आरुग्णम्) M2 चैव (for अपि) T1-3 G M3 4 चैव यत् (for यद्भवेत्) T4 lacuna, M1 वारुणीमनु चैव यत् (for 21[d]) B Dn D1 2 (also as in text) 4-10 11 (also as in text) सकेशमवधूत च रुदितोपह( D2 11 °रुत्रोपन, D6 °तापह )त च यत् — After 21[d], D2 8 11 ins

260* अवधूतमविज्ञातमतिशीतं च यद्भवेत् ।
पतिताश्च सूतिकाश्च पुश्चल्याश्च च यद्भवेत् ।

[ D8 om. (hapl) line 1 —(L 1) D2 अवज्ञातम् (for अवि°) —(L 2) D11 पुश्चल्योन्न ]

— D8 om 21[ef] —[e]) T4 G2 3 ससृष्टम् D8 S तु (for च) K4 B Dn D1 2 4-7 9-11 पु( B5 म )भि संस( K4 D11 °स्पृ )ष्टमन्न च ( K4 तु ) —[f]) K4 D2 8 S भागास्ते ( T3 G3 °र्थं ) (for भागोऽसौ) K2 3 इति, D11 T2 G1 इव (for इह)

22 [a]) D5 दृष्ट्वा, G3 श्रुत्वा (for ज्ञात्वा) D2 3, 11 तथा, T4 M तदा (for सदा) G3 विप्र (for विद्वान्) —[b]) D11 G3 अन्यानि (for अन्नानि) B Dn D1 3 4 6-10 एतान्यत्नाद्विव( D3 °न्विव, D8 °द्विम )र्जयेत्, D2 6 एताञ्ज्ञात्वा वि( D5 °न्सर्वान्वि )व° —[c]) B1, 4 Dn D1 4 8 11 ह्यसौ, D3 यथा, D5 हि सो(sic), G1 सदा (for असौ) T G2 3 राक्षसाश्च स भुंक्ते हि, M1 °सासानि सो भुंक्ते (sic), M2-4 °साना हि यो भुक्ते —[d]) M2-4 स (for यो), D5 अन्नम्, M त्वन्नम् (for ह्यन्नम्).

23 [a]) T4 योधयित्वा (sic) K2 3 तु तं, T3 4 G M1 तु तत् (for ततस्) —[c]) S मोक्षार्थं रक्षसां तेषां (= 20[c]) —[d]) K2 3 ता नदीं (by transp), K4 D1 6 नदीनां Ś1 K1 प्रेक्ष्य चोद( K1 मोच )यन्, K2 3 प्रत्यशोधयन्, Dn D1 °नोदयन्, T1 2 G M संप्रसादयन्, T3 संप्रदर्शयन्, T4 समपूजयन्

अरुणामानयामास स्वां तनुं पुरुषर्षभ ॥ २४
तस्यां ते राक्षसाः स्नात्वा तनूस्त्यक्त्वा दिवं गताः ।
अरुणाया महाराज ब्रह्महत्यापहा हि सा ॥ २५
एतमर्थमभिज्ञाय देवराजः शतक्रतुः ।
तस्मिंस्तीर्थवरे स्नात्वा विमुक्तः पाप्मना किल ॥ २६

जनमेजय उवाच ।

किमर्थं भगवाञ्शक्रो ब्रह्महत्यामवाप्तवान् ।
कथमस्मिंश्च तीर्थे वै आप्लुत्याकल्मषोऽभवत् ॥ २७

वैशंपायन उवाच ।

शृणुष्वैतदुपाख्यानं यथावृत्तं जनेश्वर ।
यथा बिभेद समयं नमुचेर्वासवः पुरा ॥ २८
नमुचिर्वासवाद्भीतः सूर्यरश्मिं समाविशत् ।
तेनेन्द्रः सख्यमकरोत्समयं चेदमब्रवीत् ॥ २९
नार्द्रेण त्वा न शुष्केण न रात्रौ नापि वाहनि ।
वधिष्याम्यसुरश्रेष्ठ सखे सत्येन ते शपे ॥ ३०
एवं स कृत्वा समयं सृष्ट्वा नीहारमीश्वरः ।
चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः ॥ ३१
तच्छिरो नमुचेश्छिन्नं पृष्ठतः शक्रमन्वयात् ।
हे मित्रहन्पाप इति ब्रुवाणं शक्रमन्तिकात् ॥ ३२
एवं स शिरसा तेन चोद्यमानः पुनः पुनः ।

C. 9 2438
B 9 43 29
K 9 44 33

24 a) T3 यत्र (for मत) T3 4 G1 3 श्रुत्वा (for ज्ञात्वा) — c) D2 11 आरुणाम् ❀ Cv अरुणा गोदावरीसमीपस्थामरुणाख्या नदीम् । ❀ — d) D. स्व तत्त्वं (for स्वां तनुं) K2 3 S (except G1) भरतर्षभ

25 a) D2 11 वै (for ते) T2 स्नातास् (for स्नात्वा) — b) K3 Dn D7 8 तनूं, B5 D1 10 T1–3 तनुं, T4 तत्र (for तनूस्) Ś1 K1 गता दिव (by transp) — c) D3 महाराजन् — d) K3 B Dn D1 4 6 7 9 10 T1 G1 M2–4 वध्यापहा (for -हत्या°) K2 D6 ब्रह्महत्या महायशा (D5 विनश्यते), D3 11 त्यापहारिणी, G2 त्या विहाय च

26 M1 om. 26ab — a) K2 D5 T1 3 एवम्, B (except B2) D1 G2 एतद्, D11 T2 एनम् (for एतम्) D1 मतम्, G2 धर्मम् (for अर्थम्) D2 3 11 इह ज्ञाय, T G2 M2–4 अ(T1 4 G2 इ)तो ज्ञात्वा (for अभिज्ञाय) G1. 3 ब्रह्महत्या गतो (G3 °ता) ज्ञात्वा — b) T1. 2 4 G M2 4 देवदेव° (for °राज) M3 देवदेवेशतक्रतु (sic) — c) K2 4 B2 4 5 Dn2 D2 3 10 तीर्थे (for तीर्थ-) T1 4 ज्ञात्वा (for स्नात्वा) M1 शक्रश्चात्र तथा स्नात्वा — d) Ś1 K1 पाप्मन, T3 स तथा (for पाप्मना) D2 3 11 विमुक्तिं प्राप्तवान्किल (D2 °ळ) — After 26, B5 ins an addl. colophon [*Sub-parvan* बलदेवतीर्थयात्रा]

27 b) K4 B D (except D2 3 11) M2–4 वध्याम् (for -हत्याम्) G2 समाप्तवान् — c) K4 कस्मिंश्च (for अ°) Ś1 K1 3 सु; K2 स्व, D1 4 तु (for च) T1. 2 वा, T2 4 G M स (for वै) — d) D11 माप्लुतो K2 [अ]कल्मषो, D5 11 °सो

28 a) K2 corrupt. T4 M2–4 [इ]दम्, G1 [ए]कम् (for [ए]तद्) — b) T1 2 पुरातन, M1 नरेश्वर (for जने°) — c) M3 विभेद D1 8 समये — d) K2 पुन (for पुरा)

29 b) K2 3 D3 11 T1 रश्मीन् Ś1 K1 सूर्यरश्मीनुपाविशत् — c) D3 येन (for तेन) T3 तेनेंद्रमकरोत्सख्ये (sic) — d) K2 D2 T2 3 इमम् (for इदम्) K4 समये चैवमब्रवीत्

30 a) K1 4 D2 11 T4 G M1 नार्द्रेण त्वा (K4 च), Dn D1 4–10 न चार्द्रेण, T2 आर्द्रेण त्वा (for नार्द्रेण त्वा) D3 च (for न) Ś1 K1. 2 D1 4 5 शुष्केन — b) D3 चापि (for नापि) B1. 3–5 Dn D1 2 4–10 चाहनि, G1. 3 M वा दिवा (for वाहनि) K4 न रात्रौ वा दिवा न च, B2 T1 2 4 G2 न रात्रौ न (T4 वा) दिवापि वा (B2 °वा तथा), T3 रात्रौ वापि दिवापि वा — c) D2 3 वधिष्यामि न दैत्येंद्र — d) D2 शपे, M4 सखे (for सखे) D2 3 सदा (for शपे) K2 सख्ये सत्येन सेन ते, D11 सखे शपे सत्येन तदा (hypermetric)

31 a) D3 M1. 2 4 कृत्वा तु (M1 स), M3 उक्त्वा तु (for स कृत्वा) Dn एव स समय कृत्वा, G2 एव स शिरसा तेन (= 33a), Cv एव स कृत्वा समयं (as in text) — b) Ś1 D2 T G1. 3 स्पृष्ट्वा, K1 2 B D2 4–7 9. 10 दृष्ट्वा, D11 स्मृत्वा, Cv सृष्ट्वा (as in text) — c) T3 स (for [अ]स्य)

32 b) K4 B D1–7 9. 10 T1 G3 M1 3 अन्वियात्, D2 अन्वगात्, D3 अन्विय (sic) (for अन्वयात्) — K2 om. (hapl) 32cd — c) B3 4 D1 4–7 9 10 G1 3 भो; D3 नो (for हे) K3 पापवृजे (sic), D1

C 9 2430 B 9 43. 39 K 9 44 38

पितामहाय संतप्त एतमर्थं न्यवेदयत् ॥ ३३
तमब्रवील्लोकगुरुररुणायां यथाविधि ।
इष्ट्वोपस्पृश देवेन्द्र ब्रह्महत्यापहा हि सा ॥ ३४
इत्युक्तः स सरस्वत्याः कुञ्जे वै जनमेजय ।
इष्ट्वा यथावद्बलभिदरुणायामुपास्पृशत् ॥ ३५
स मुक्तः पाप्मना तेन ब्रह्महत्याकृतेन ह ।
जगाम संहृष्टमनास्त्रिदिवं त्रिदशेश्वरः ॥ ३६
शिरस्तच्चापि नमुचेस्तत्रैवाप्लुत्य भारत ।
लोकान्कामदुघान्प्राप्तमक्षयान्राजसत्तम ॥ ३७
तत्राप्युपस्पृश्य बलो महात्मा
दत्त्वा च दानानि पृथग्विधानि ।
अवाप्य धर्मं परमार्यकर्मा

---

सुपापेति, D8 विपाशेति, D9 यान्पापेति, M8 शक्र इति (for पाप इति) B1 2 M3 भो भो मित्रहन्पापेति, Dn भो मित्रहत पापेति, D2 8 11 क यामीति क यामीति — d) K4 T1 ब्रुवाण, M1 बहुश (for ब्रुवाणं) D1 शत्रुम् (for शक्रम्)

33 a) G3 स एव (by transp) — b) Dn D1 5 नोद्यमान — c) D5 स तदा, D6 सतप्तम्, T2 समाप्त (for सतप्त) — d) T2 4 G1 2 एवम्, T3 इदम् (for एतम्) K4 निवेदयत्, D1 उदैरयत् (for न्यवेद°) D5 अर्थं ह्येतन्निवेदयत्

34 a) K4 तत्र, D6 ततो (for तम्) — b) D5 महेंद्राय (for अरुणाया) — c) B6 इह, M3 गत्वा, M3 स्पृष्ट्वा (for इष्ट्वा) K3 [अ]पस्पृश्य, K4 Dn D2-4 8-11 [उ]पस्पृश्य, D6 T2 [अ]पस्पृश (for [उ]प°) Ś1 K1 देवेश, K4 T2-4 G1 3 राजेंद्र (for देवेन्द्र) — d) D2 3 M1-4 वध्यापहा Dn D1 4-10 तीर्थे पाप भयापहे — After 34, B D ins

261* एषा पुण्यजला शक्र कृता मुनिभिरेव तु ।
निगूढमस्या गमनमिहासीत्पूर्वमेव तु ।
ततोऽभ्येत्यारुणा देवीं प्लावयामास वारिणा ।
सरस्वत्यारुणायाश्च पुण्योऽयं सगमो महान् ।
इह त्वं यज देवेन्द्र दद दानान्यनेकश । [5]
अत्राप्लुत्य सुघोराच्च पातकाद्विप्रमोक्ष्यसे ।

[(L 1) D3 11 तुल्य- (for पुण्य-) D2 -जला, D5 7 -जना (for -जला) — B1 om (hapl) line 2 D5 reads lines 3-5 on marg — (L 3) Dn2 देवी, D8 देवा (for देवीं) Dn1 D1-3 11 ततोभ्येत्यारुणा देवी (for the prior half) The portion from यामास up to ध्वजा (in 9 43 24d) is lost in D4 on missing folios D3 11 पावयामास (for प्लाव°) — (L 5) D8 जप (for यज) Dn D6 ददद्, D11 ददौ (sic) (for दद) D8 ददाती नान्यनेकश (sic) (for the post half) — (L 6) B3 Dn आप्लुत्यात्र (by transp), D7 9 अवाप्लुत्य D2 8 आप्लुत्य च स घोरद्दै, D11 आप्लुत्य सुघोरान्वै (submetric) (for the prior half) D9 हि (for वि-) D3 पातकात्प्रतिमुच्यसे (for the post half) ]

35 D4 missing (cf v l 261*) — a) T3, 4 G सन् (for स) D2 T G3 M2-4 सरस्वत्या, D6 7 11 G1 M1 °त्या (for °त्या) — b) D3 कुडे वै, T1 2 4 G2 M गुह्याया, T3 गुह्यया, G1 गुह्याया, G3 गगायां (for कुञ्जे वै) — For 35c-36b, B5 subst 262* — c) D2 वळभिद्, D3 हुलभिद् (sic), M2-4 वलभिद् (for बल°) — d) Ś1 K1-3 अथास्पृशत्; K4 (sup lin as in text) यथाविधि, Dn2 D6 T G2 3 M2-4 उपस्पृशत्, D2 3 M1 उ(D3 अ)पस्पृशन्

36 D4 missing (cf v l 261*) — a) B2 पापिना (for पाप्मना) — b) K4 B1-4 Dn D1 5-7 9 10 G1 M2-4 वध्या (for -हत्या) Ś1 K1 4 (also as in text) B1 4 D6-7 8. 10 च, S तु (for ह) — For 35c-36b, B5 subst

262* ब्रह्मणो वचनाच्छक्रोऽप्यजयज्ञैरनेकश ।
दत्त्वा दानान्यनेकानि स्नात्वा तीर्थे शतक्रतु ।
विपाप्मा विरजा श्रीमान्ब्रह्मवध्यां विधूय स ।

— c) K3 8 संहृष्टश्च जगामातस् (K8 °श्च) — d) K3 Dn D1 6 8 8 11 T3 M1 3 4 त्रिदिवेश्वर

37 D4 missing (cf. v l 261*) — a) K3 corrupt, K4 T1 2 तत्र, T3, 4 G2 तस्य (for तच्च) G1, 3 शरीरस्यापि नमुचेस् — b) D3 11 तथा (for तत्र) — cd) Ś1 K1 कामधुघान्, B3 4 Dn D6 °दुह°, D1 पुण्यकृतान्, D5 कामदुघ, D7-9 M °दुहान् (for °दुघान्) D6 अक्षय्यान् B5 लोकानवाप वै पुण्यान्क्षयान्कर्मभिरर्जितान्

38 D4 missing (cf v l 261*) Before 38, B D (D4 missing) ins वैशंपायन उवाच — a) B5 D2 8 S तदा (for बलो) — b) B5 transp दत्त्वा च and दानानि T1 2 [अ]पि; M1, 2 4 [अ]थ (for च) T4 विद्वानि (for दानानि) Ś1 K1-3 चतुर्विधानि (for पृथग्वि°). — c) K4 (also as in text) D1, 2, 5 पर-

जगाम सोमस्य महत्स तीर्थम् ॥ ३८
यत्रायजद्राजसूयेन सोमः
साक्षात्पुरा विधिवत्पार्थिवेन्द्र ।
अत्रिर्धीमान्विप्रमुख्यो बभूव
होता यस्मिन्क्रतुमुख्ये महात्मा ॥ ३९
यस्मिन्नभूत्सुमहान्दानवानां
दैतेयानां राक्षसानां च देवैः ।
स संग्रामस्तारकाख्यः सुतीव्रो
यत्र स्कन्दस्तारकाख्यं जघान ॥ ४०
सैनापत्यं लब्धवान्देवतानां
महासेनो यत्र दैत्यान्तकर्ता ।
साक्षाच्चात्र न्यवसत्कार्त्तिकेयः
सदा कुमारो यत्र स प्लक्षराजः ॥ ४१

इति श्रीमहाभारते शल्यपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## ४३

जनमेजय उवाच ।
सरस्वत्याः प्रभावोऽयमुक्तस्ते द्विजसत्तम ।
कुमारस्याभिषेकं तु ब्रह्मन्व्याख्यातुमर्हसि ॥ १
यस्मिन्काले च देशे च यथा च वदतां वर । C 9 2431 B 9 44 2 K 9 43 2

---

मार्यं, T3 त्वनिवार्यं-, G3 परकार्यं (for °मार्यं) D3 अत्रापि धर्मं परमार्थकामो —[d]) D11 लोमन्य (sic) (for सो°) B वदा (for महत) K3. 4 B (except B5) Dn D1-2 6-11 T1. 2 G1 2 सु, D. च (for स)

39 D4 missing (cf. v l 261*) —[a]) D11 तत्र (for यत्र) —[b]) T3 राक्षसेंद्र (sic), G3 पार्थिवेंद्र D8 साक्षाच्चपराधिप पार्थिवेंद्र (sic) —[c]) D2 वेद मुख्यो, T G ब्रह्मपुत्रो (for विप्रमुख्यो) —[d]) T2 हेता, G2 कहाना (sic) (for होता) M2 त तु (for क्रतु) B2 Dn1 D10 M2 मुख्यो, G2 मध्ये (for मुख्ये)

40 D4 missing (cf v l 261*) —[a]) D3 तस्य (for यस्य) K4 om भूत् Ś1 K1 2 4 B (except B1) Dn D1 2 6 7 9 10 G3 महद्, K8 D3 T2 -महा- (for महान्) —[b]) D3 11 दैत्येयाना, D8 यस्यातेभूद्- (for दैतेयाना) D3 दानवाना च, T3 4 रक्षसा चैव (for राक्षसाना च) D11 मेदै, T8 मुख्यै (for देवै) —[c]) T4 corrupt G1 8 संग्रामो वै (for स संग्रामम्) D11 तारकाख्य T8 G2 सुतीर्यो (for °व्रो) B Dn D1. 6-10 यस्मिन्युद्धं (D8 9 °द्धे) तारकाख्य सुतीव्र (D6 °घोरं) —[d]) Dn1 स्कधस् K4 B3-6 D2 8. 11 S तारक वै (T2 °क च, T4 °कान्वै) (for तारकाख्यं) T3 [आ]-जघान

41 D4 missing (cf v l 261*) —[a]) B D2 T1 सैनापत्य —[b]) S महासेनस्त्वतकर्तासुराणा —[c]) K4 D3 7 10 चैवं; B Dn D1 6 8 T8 चापि, D6 सैन्य, D9 चैन, T4 वासं, G2 चैव (for चात्र) G2 न्यविशत्, M1 निवसत् (for न्य°) —[d]) Ś1 K1-3 D2 8 11 सनत्कुमारो (for सदा कु°) Dn स (Dn2 om) पुष्कराक्ष, T1 2 M ररक्ष राजन्, T3 4 G न क्षत्रकामा (T8 नामा) (for स प्लक्षराज)

Colophon D4 missing —*Sub-parvan* Ś1 K1-3 B1 2 T1 2 M2 4 रामतीर्थयात्रा, K4 गदायुद्धे रामतीर्थयात्रा, B4 Dn D2 3 6 8 9 11 बलदेवतीर्थयात्रा, B5 D1 हलधरतीर्थयात्रा, M1 तीर्थयात्रा, Cal. Bom. ed गदा(Cal ed गदायुद्ध)पर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्यान, Kumbh ed ह्रदप्रवेश —*Adhy name* Ś1 K1-3 वसिष्ठान्वापवाह, T1 2 अरुणाप्रशसन, M2 4 शापमोक्ष —*Adhy no* (figures, words or both) B3 28, B4 G3 44, Dn2 13, D7 12, D8. 10 14, T G1 2 M 45 —*Sloka no* Dn 50, D7 9 49

## 43

1 D4 missing up to ध्वजा (in 24[d]) (cf. v l 261*) T4 om the ref —[a]) T8 य (for ऽयम्) —[b]) Ś1 K1 8 मे, M1 तु (for ते) K2 मुनि, G8 जन (for द्विज) —[c]) D1 च, G2 मे (for तु) —[d]) D1 विद्वन् (for ब्रह्मन्) D8 व्याचक्षुम् (sic); T2-4 G2 8 आख्यातुम्, G1 नो व्या° (for व्याख्या°)

2 D4 missing (cf v l. 1) —[a]) D3 काळे K4 D5-7 9 10 यस्मिन्देशे च काले च —[b]) K4 D2 -वद्‌-

C 9 2451 B 9 44 2 K 9 45 2 यैश्चाभिषिक्तो भगवान्विधिना येन च प्रभुः ॥ २
स्कन्दो यथा च दैत्यानामकरोत्कदनं महत् ।
तथा मे सर्वमाचक्ष्व पर कौतूहलं हि मे ॥ ३

वैशंपायन उवाच ।

कुरुवंशस्य सदृशमिदं कौतूहलं तव ।
हर्षमुत्पादयत्येतद्वचो मे जनमेजय ॥ ४
हन्त ते कथयिष्यामि शृण्वानस्य जनाधिप ।
अभिषेकं कुमारस्य प्रभावं च महात्मनः ॥ ५
तेजो माहेश्वरं स्कन्नमग्नौ प्रपतितं पुरा ।
तत्सर्वभक्षो भगवान्नाशकद्दग्धुमक्षयम् ॥ ६
तेनासीदति तेजस्वी दीप्तिमान्हव्यवाहनः ।
न चैव धारयामास गर्भं तेजोमयं तदा ॥ ७
स गङ्गामभिसंगम्य नियोगाद्ब्रह्मणः प्रभुः ।
गर्भमाहितवान्दिव्यं भास्करोपमतेजसम् ॥ ८
अथ गङ्गापि तं गर्भमसहन्ती विधारणे ।
उत्ससर्ज गिरौ रम्ये हिमवत्यमरार्चिते ॥ ९
स तत्र ववृधे लोकानावृत्य ज्वलनात्मजः ।
ददृशुर्ज्वलनाकारं तं गर्भमथ कृत्तिकाः ॥ १०
शरस्तम्बे महात्मानमनलात्मजमीश्वरम् ।
ममायमिति ताः सर्वाः पुत्रार्थिन्योऽभिचक्रमुः ॥ ११

---

दता, $D_1$ वेदविदां (for च वदता) $Ś_1$ $K_8$ वर $G_1$ यथा च ***श्वर° —$^{c}$) $D_2$ बळवान् (for भग°) —$^{d}$) $D_{11}$ येन तु, $T_{1-3}$ G $M_1$ केन च, $T_4$ केनचित् (for येन च) $K_4$ प्रभो।

3 $D_4$ missing (cf v l 1) —$^{c}$) $D_8$ यथा (for तथा) $Ś_1$ $K_{1-3}$ तत्, $D_{3\ 8\ 11}$ त्व (for मे) S तथा सर्वं स($T_{1\ 2}$ त्व, $M_1$ म)माचक्ष्व —$^{d}$) $Dn_2$ $D_8$ कौतुहलं

4 $D_4$ missing (cf v l 1) $D_6$ reads the ref on marg (see m) $D_6$ om 4 —$^{b}$) $K_{2\ 3}$ $M_1$ पर, $G_8$ हित (for इद) $T_8$ महत्, $T_4$ मम, $G_{1\ 8}$ हि ते ($G_3$ मे) (for तव) $K_4$ B D ($D_6$ om., $D_4$ missing) कौतू($Dn_2$ तु)हलमिद तव ($D_8$ वच) —$^{c}$) $T_3$ उत्पादयन् $K_4$ B (except $B_5$) D ($D_6$ om, $D_4$ missing) $T_{1\ 2}$ एव (for एतद्) —$^{d}$) $K_4$ वचसो, $Dn_1$ *चो मे, $T_3$ अवोच (for वचो मे)

5 $D_4$ missing (cf v l 1) —$^{a}$) $T_{1-3}$ G अहं तत् ($G_1$ ते), $T_4$ हत तत् (for हन्त ते) —$^{b}$) $K_2$ शृणुनस्य (sic), $T_{1-3}$ G $M_{2\ 4}$ शृण्वतस्ते, $T_4$ शृणु तत्ते, $M_1$ शुश्रूषा चेज् (for शृण्वानस्य) $B_5$ $D_{5-7\ 9\ 10}$ $T_4$ नराधिप —$^{d}$) $T_4$ प्रभवं

6 $D_4$ missing (cf v l 1) —$^{a}$) $G_2$ $M_4$ रेतो (for तेजो) $T_{2\ 3}$ महेश्वर ($T_3$ °रात्) (for माहेश्वर) $Ś_1$ $K_{1-3}$ स्कन्दम् (for स्कन्नम्) —$^{b}$) $Ś_1$ $K_1$ अग्नि, $M_3$ अग्ने (for अग्नौ) $B_1$ S प्रणिहित (for प्रपतित) $Dn_1$ भुवि, $T_{1\ 2}$ तदा (for पुरा). —$^{c}$) $D_1$ भक्ष्यो T G तत्सर्वं भगवानग्निर् —$^{d}$) $T_{2\ 4}$ हर्तुम् (for दग्धुम्) $K_2$ $B_3$ अव्यय $T_3$ नशक्तो धर्तुमक्षयं, $G_{2\ 3}$ नाशक्तोद्धर्तुमक्षम°

7 $D_4$ missing (cf v l 1) —$^{a}$) $K_4$ [आ]सीन्मंद, $D_2$ °दत, $T_{1\ 2}$ $G_{1.3}$ सीदति, $T_4$ तेजसि (for [आ]सीदति) $T_3$ न सेहे चातितेजस्वी —$^{b}$) $K_4$ $B_3$ दीप्तवान् ($B_2$ °मान्), $D_{11}$ दीप्तिवान् —$^{c}$) $K_2$ तदैव (hypermetric), $K_4$ $D_{11}$ $M_{1\ 2\ 4}$ चैतद्, $D_8$ $T_2$ चैव, $T_{1\ 3\ 4}$ G $M_3$ चैन (for चैव) $D_8$ न चैतद्धारयामासुस् —$^{d}$) $B_1$ $D_9$ तथा (for तदा) $K_4$ $D_{8\ 11}$ तोययुक्त ($K_4$ तोपायुंक्त) तदा प्रभु°, T G ब्रह्मणे उ($T_{1\ 2}$ चो-, $T_4$ $G_2$ धु)क्तवान्प्रभु, M ब्रह्मायुजत्तथा प्रभु

8 $D_4$ missing (cf v l 1) $T_{1\ 2}$ om (hapl) $8^{ab}$ —$^{a}$) S ($T_{1\ 2}$ om) उप (for अभि) —$^{b}$) $K_2$ ब्रह्मणा, $T_4$ ब्राह्मण — $T_3$ om. $8^{cd}$ —$^{c}$) $K_1$ आर्दितवान्, $D_{5\ 11}$ M आधत्त° (for आहित°)

9 $D_4$ missing (cf v l 1) —$^{a}$) $K_4$ तथा (for अथ) $G_3$ तद् (for त) —$^{b}$) $T_{1\ 2}$ $G_3$ च, $T_4$ $G_2$ [अ]व (for वि-) $T_3$ न सेवेतेह धारणे —$^{c}$) Ca cites उत्ससर्ज (as in text) $G_3$ तरौ (for गिरौ) S तस्मिन् (for रम्ये) —$^{d}$) $K_4$ हिमवत्यमरान्विते, $D_{2\ 6\ 11}$ °त्परमार्चिते

10 $D_4$ missing (cf v l 1) —$^{a}$) $D_{11}$ विवृते (for ववृधे) —$^{c}$) $D_2$ ज्वळनाकारं —$^{d}$) $D_9$ गर्भ ** $D_{11}$ कर्तिका (for कृत्तिका)

11 $D_4$ missing (cf v l 1) —$^{a}$) $Ś_1$ $K_{1-3}$ $T_2$ शारस्तंभे —$^{b}$) $K_3$ ममत्वात्मजम् (sic), $D_2$ अनळात्मजम् —$^{c}$) S सर्वास्ता (by transp) — $T_3$ om (? hapl) $11^{d}$–$15^{c}$ —$^{d}$) $K_1$ $B_{1\ 2}$ [ऽ]ति-, $K_2$ $D_6$ $T_{1\ 2}$

तासां विदित्वा भावं तं मातॄणां भगवान्प्रभुः ।
प्रस्नुतानां पयः षड्भिर्वदनैरपिबत्तदा ॥ १२
तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः ।
परं विस्मयमापन्ना देव्यो दिव्यवपुर्धराः ॥ १३
यत्रोत्सृष्टः स भगवान्गङ्गया गिरिमूर्धनि ।
स शैलः काञ्चनः सर्वः संबभौ कुरुसत्तम ॥ १४
वर्धता चैव गर्भेण पृथिवी तेन रञ्जिता ।
अतश्च सर्वे संवृत्ता गिरयः काञ्चनाकराः ॥ १५

कुमारश्च महावीर्यः कार्त्तिकेय इति स्मृतः ।
गाङ्गेयः पूर्वमभवन्महायोगबलान्वितः ॥ १६
स देवस्तपसा चैव वीर्येण च समन्वितः ।
ववृधेऽतीव राजेन्द्र चन्द्रवत्प्रियदर्शनः ॥ १७
स तस्मिन्काञ्चने दिव्ये शरस्तम्बे श्रिया वृतः ।
स्तूयमानस्तदा शेते गन्धर्वैर्मुनिभिस्तथा ॥ १८
तथैनमन्वनृत्यन्त देवकन्याः सहस्रशः ।
दिव्यवादित्रनृत्तज्ञाः स्तुवन्त्यश्चारुदर्शनाः ॥ १९ C 9 2458 B 9 44 19 K 9 45 19

---

M3 त्रि ( for उमि ) K4 D2 -7 8.11 T1 G M -चुक्रुशु , B1 -चुकुशु , D1 -चक्रशु , D11 -चक्रुशु , T2 चक्रशु ( for -चक्रुशु ) T4 समायमिति चुक्रुशु

12 D4 missing ( cf. v l. 1 ) T3 om 12 ( cf v l 11 ) — [a]) K4 D2 8 11 T1 4 G2 3 M1.4 भाव तु, B3 M3 स भाव ( by transp ), G1 भगवान् — [c]) Dn1 प्रस्नुताना, G2 पटस्नुताना, G3 प्रास्नुताना, Ca प्रस्नु° ( as in text ) G1.2 स्तन ( for पय ) — [d]) T2 स्याननैर्; M1 वचनैर् ( for वदनैर् )

13 D4 missing ( cf. v l 1 ) T3 om 13 ( cf v l. 11 ) — [a]) K2 तेपि, D3 त तु ( for त प्र ) D2 समालक्ष्य — G2 om 13[c]–15[d] — [d]) D11 om देव्यो M1 देव्यो दिव्य वपुश्च ता

14 D4 missing ( cf v l 1 ) T3 om 14 ( cf v l 11 ) G3 om 14 ( cf v l 13 ) — [a]) Ś1 K1 4 तत्र ( for यत्र ) K4 [उ]पविष्ट ( hypermetric ) ( for [उ]त्सृष्ट ) T1 G1 M च गर्भ स, T4 G2 च गर्भश्च ( for स भगवान् ) T2 यत्रोत्सृष्टन्य गर्भस्य — [b]) K2 D1-3 8 11 T2 गंगाया ( D1 T2 °या ), T4 गर्भाया ( sic ) ( for -गङ्गया ) — [c]) D3 शैठ , G1 शैल K4 om , T4 श्रियम् ( for सर्व ) — [d]) K2 3 प्रथमौ, T1 G2 स वर्मा, T4 अभवत् ( for संबभौ ) K2-4 B1 Dn कुरु ( K2 °ल )नदन, S ( T3 G3 om ) मेरुरु( G3 °म )त्तम

15 D4 missing ( cf. v l 1 ) T3 om 15[abc] ( cf. v l. 11 ) G3 om 15 ( cf v l 13 ) — [a]) M1 वर्धिता, M3 वर्धता D1.11 T ( T3 om ) G ( G3 om. ) M3 तेन ( for चैव ) K3 गर्त्तेन ( sic ) ( for गर्भेण ) — [b]) D2.3 11 वानु , T4 धनु , M3 चापि ( for तेन )° — [c]) Ś1 K1 3 B1.3 4 ततश्च ( for अ ) — [d]) T3 नियता ( for गिरय ) T G1 2 काचनात्मका ( T4 °त्मजा , G1 °त्मिका ), M1 कनकाकरा

16 D4 missing ( cf v l 1 ) — [a]) B Dn D2 3 6-10 सु , D. 11 स, T G1 3 M तु ( for च ) G2 तस्मादेव कुमारस्तु — [b]) T3 गागेय स ( for कार्त्तिकेय ) — Ś1 K1-3 om ( hapl ) 16[c]–17[b] — [c]) D11 गागेय — [d]) S ( except G1 ) -कायो ( for योग ) D2 वला न्वित , T4 G2 M3 ( also as in text ) महाबल — After 16, D5 reads 31[ab]

17 D4 missing ( cf. v l 1 ) Ś1 K1-3 om 17[ab] ( cf v l 16 ) B1 M1 om ( hapl ) 17[ab] D5 reads 17[ab] after 18[b] — [a]) The portion of the text from स देवस्त up to सामिषेचनिक ( in 9 44 3[c] ) is lost in T3 on a missing folio B1 3 Dn D1 6-10 श्र( D5 स )मेन ( for स देवस् ) K4 एव ( for चैव ) T4 स देवस्तनितेजस्वी — [b]) T4 [अ]पि ( for च ) — [c]) D2 T4 M3 4 चैव ( for ऽतीव ) — [d]) K2 सोमवत् ( for चन्द्र° ) D1 मानस ( for दर्शन ) D8 चद्रले खोपमानन

18 D4 missing ( cf. v l 1 ) T3 missing ( cf v l 17 ) — [a]) D1 कस्मिन् ( for त° ) K2 देवी ( sic ) ( for दिव्ये ) — [b]) Ś1 K1 2 B2 शरस्तभे K3 Dn D2 3.11 T4 G1 3 [अ]न्वित ( for वृत ) K8 शर स्तंबेद्रियावृत — After 18[b], D5 reads 17[ab] — [c]) T4 सूयमानस् Ś1 K1 B1 2 Dn D1 2 6-10 सदा, T2 तया ( for तदा ) M1 राजन् ( for शेते ) — [d]) T1 गंधर्व ( for गन्धर्वैर् ) D5 विबुधैस् ( for मुनिभिस् ) K3 D. 11 T2 4 G1.3 M3 तदा ( for तथा )

19 D4 missing ( cf v l 1 ) T3 missing ( cf. v l 17 ) B3 partly damaged — [a]) D1 M1 अथ ( for तथा ) K2-4 B1 3 D2 8 T4 [ए]वम् K3 अन्वदृश्यत, K4 मोदल्यो ( sic ), B1 D1 5 8 अनुनृत्यत ( D1 °तो, D5 °ति, D8 °त ), S ( T3 missing ) उप- नृत्यंति ( for अन्वनृत्यन्त ) — [b]) D3 सहस्रधा — [c])

C 9 2469
B 9 44 20
K 9 45 20

अन्वास्ते च नदी देवं गङ्गा वै सरितां वरा ।
दधार पृथिवी चैनं बिभ्रती रूपमुत्तमम् ॥ २०
जातकर्मादिकास्तस्य क्रियाश्चक्रे बृहस्पतिः ।
वेदश्चैनं चतुर्मूर्तिरुपतस्थे कृताञ्जलिः ॥ २१
धनुर्वेदश्चतुष्पादः शस्त्रग्रामः ससंग्रहः ।
तत्रैनं समुपातिष्ठत्साक्षाद्वाणी च केवला ॥ २२
स ददर्श महावीर्यं देवदेवमुमापतिम् ।
शैलपुत्र्या सहासीनं भूतसंघशतैर्वृतम् ॥ २३
निकाया भूतसंघानां परमाद्भुतदर्शनाः ।
विकृता विकृताकारा विकृताभरणध्वजाः ॥ २४
व्याघ्रसिंहर्क्षवदना बिडालमकराननाः ।
वृषदंशमुखाश्चान्ये गजोष्ट्रवदनास्तथा ॥ २५
उलूकवदनाः केचिद्गृध्रगोमायुदर्शनाः ।
क्रौञ्चपारावतनिभैर्वदनै राङ्कवैरपि ॥ २६

---

K₂ B ( B₃ damaged ) Dn D₁ ₂ ₅₋₇ ₉ ₁₀ नृत्यज्ञा, K₄ -नृत्यज्ञा, D₈ नृत्यत्य ( for नृत्तज्ञा ) — $^d$ ) D₂ ₅ T₂ ₄ G स्तुवतश्, D₉ स्तवत्यश्

20 D₄ missing ( cf v l 1 ) T₃ missing ( cf v l 17 ) B₃ damaged D₈ corrupt for 20$^{ab}$ — $^a$ ) K₃ D₈ तेग ( for देव ) D₁ अनुपोसिश्च त देव ( sic ), T₁ ₂ अन्वयुक्ता स्त्रिय सर्वा, T₄ G अन्वयुश्चाप्सय सर्वे, M अन्व युक्ताश्च त देव — $^b$ ) D₁ S ( T₃ missing ) च ( for चै ) D₅ गगा चैव सरस्वती — $^c$ ) D₉ चैव — $^d$ ) Ś₁ K₁ दधती ( for बिभ्रती ) D₉ नृपम्, M₃ चैनम् ( for रूपम् )

21 D₄ missing ( cf v l 1 ) T₃ missing ( cf v l 17 ) D₆ om 21$^a$–22$^b$ B₃ damaged — $^a$ ) D₅ यात ( for जात ) K₄ B₁ ₄ ₅ D ( D₆ om, D₄ missing ) T₃ तत्र; B₂ चैव ( for तस्य ) — $^b$ ) M₄ चक्रे चात्र ( for क्रियाश्चक्रे ) — $^c$ ) D₁₁ G₃ देवश् ( for वेदश् ) D₂ ₈ ₁₁ [ए]व ( for [ए]न ) — $^d$ ) D₂ कृतां जळी

22 D₄ missing ( cf v l 1 ) T₃ missing ( cf v l 17 ) D₆ om 22$^{ab}$ ( cf v l 21 ) — $^a$ ) K₂ धनुर्वेधा चतुष्पादा ( sic ) — $^b$ ) Ś₁ चास्त्र, K₁ शास्त्र, T₂ ₄ M सास्त्र ( for शस्त्र ) D₂ ससंनह — $^d$ ) K₃ D₅ T₄ [इ]व ( for च ) D₂ केवळा

23 D₄ missing ( cf v l 1 ) T₃ missing ( cf v l 17 ) B₃ damaged — $^a$ ) T₄ तद्, M₁ स, M₂₋₄ तं ( for स ) T₄ दर्शन ( for ददर्श ) K₂ D₁ महादेव, D₂ ₈ ₁₁ °वीर्यो, S ( T₃ missing ) °स्मान ( for °वीर्यं ) — $^b$ ) D₅ प्रभु ( for देव ) Dn उपागत, G₁ M₂₋₄ उमापति ( for °तिम् ) — $^c$ ) D₂ शैळपुत्र्या K₃ ₄ B₁ ₂ ₄ D₆₋₇ ₉ ₁₁ समासीनं, S ( T₃ missing ) समागम्य ( for सहासीनं ) — D₃ om 23$^d$–24$^a$ — $^d$ ) K₂ om ( hapl ) from शतैर् up to भूतसंघा ( in 24$^a$ ) B₅ गणैर् ( for -शतैर् ) K₃ S ( T₃ missing ) भूतसघै ( G₂ °सै ) समावृतं ( T₄ G₁ ₃ M °त ).

24 D₄ missing ( cf v l 1 ) T₃ missing ( cf v l 17 ) K₂ om निकाया भूतसघा; D₃ om 24$^a$ ( for both, cf v l 23 ) B₃ damaged — $^a$ ) G₂ निकायो, M₂ निकाय, Ca निकाया ( as in text ) — $^b$ ) Dn परमाद्भुत-, M₂ °मात्सक ( for °माद्भुत ) — B₂ om ( hapl ) 24$^c$–25$^b$ — $^c$ ) Ś₁ K₁₋₃ D₂ ₁₁ विकृताचारा, Dn °ता रौद्रा ( for °ताकारा ) — $^d$ ) K₃ ध्वज S ( except G₁, T₃ missing ) विकृताम्बर( T₄ °र )-णध्वजा

25 T₃ missing ( cf v l 17 ) B₂ om 25$^{ab}$ ( cf. v l 24 ) B₃ damaged — $^b$ ) D₂ T₁ विडाळ, T₄ G₃ बिलाळ, M विलाळ ( for बिडाल ) D₃ reads from नना up to पाराव ( in 26$^c$ ) on marg — $^c$ ) D₄ वक ( for वृष ) D₂ ₁₁ चित्र ( for दश ) T₁ ₂ G M Cv [ए]त्र, T₄ [अ]पि ( for [अ]न्ये ) ❀ Cv वृषदशो वन मार्जार । ❀ — $^d$ ) K₃ गजोष्ठ, D₁ S ( T₃ missing ) खरोष्ट्र ( for गजोष्ट्र ) B₁ तत्र तत्र व्यधारयन् ( = 27$^d$ )

26 T₃ missing ( cf v l 17 ) D₈ om ( hapl ) 26$^a$–27$^b$ B₃ damaged D₃ reads up to पाराव on marg — $^a$ ) M₁ -दर्शना ( for -वदना ) K₂ केपे ( sic ), K₄ D₁ चान्ये, D₂ चापि ( for केचिद् ) — $^b$ ) K₂ गृद्ध ( for गृध्र ) G₁ ₃ गृध्रमायू( G₃ °यु )रदर्शना — $^c$ ) T₄ क्रौंचपारातवदनै, G₂ °वाराहवदनै — $^d$ ) K₃ राकवैर्, K₄ व्याहुवैर्, Dn शंकवैर्, D₁ आकुलैर्, D₂ मकरैर्, D₇ रांतकैर्, T₁ ₂ G₁ ₃ M₂₋₄ भैरवैर्, Ca राङ्कवैर् ( as in text ) T₄ G₂ काकवक्त्रैश्च भैरवै, M₁ वदनै कर्कसंनिभै

27 T₃ missing ( of v l 17 ) D₈ om 27$^{ab}$ ( cf v l 26 ) B₃ damaged for 27$^{ab}$ — $^a$ ) M₂₋₄ चाविद् D₅ ₇ ₉ ₁₀ M₁ -शल्लक ( D₅ °ल्लक, M₁ °लल- ) ( for -शल्यक ) — $^b$ ) K₃ T₁ ₂ G₁ ₃ M₁ ₄ खरैळ( K₃ °ल )क, B ( B₃ damaged ) Dn D₁₋₇ ₉ ₁₀ M₂ अजै

श्वाविच्छल्यकगोधानां खरेडकगवां तथा ।
सदृशानि वपूंष्यन्ये तत्र तत्र न्यधारयन् ॥ २७
केचिच्छैलाम्बुदप्रख्याश्चक्रालातगदायुधाः ।
केचिदञ्जनपुञ्जाभाः केचिच्छ्वेताचलप्रभाः ॥ २८
सप्तमातृगणाश्चैव समाजग्मुर्विशां पते ।
साध्या विश्वेऽथ मरुतो वसवः पितरस्तथा ॥ २९
रुद्रादित्यास्तथा सिद्धा भुजगा दानवाः खगाः ।
ब्रह्मा स्वयंभूर्भगवान्सपुत्रः सह विष्णुना ॥ ३०
शक्रस्तथाभ्ययाद्द्रष्टुं कुमारवरमच्युतम् ।
नारदप्रमुखाश्चापि देवगन्धर्वसत्तमाः ॥ ३१
देवर्षयश्च सिद्धाश्च बृहस्पतिपुरोगमाः ।
ऋभवो नाम वरदा देवानामपि देवताः ।
तेऽपि तत्र समाजग्मुर्यामा धामाश्च सर्वशः ॥ ३२
स तु बालोऽपि भगवान्महायोगबलान्वितः ।
अभ्याजगाम देवेशं शूलहस्तं पिनाकिनम् ॥ ३३
तमाव्रजन्तमालक्ष्य शिवस्यासीन्मनोगतम् ।
युगपच्छैलपुत्र्याश्च गङ्गायाः पावकस्य च ॥ ३४
किं नु पूर्वमयं बालो गौरवादभ्युपैष्यति । C 9 2454 B 9 44 35 K 9 45 35

ड( M2 °ळ )क, D1 अजाविक, D2 खड्गडक, T4 M3 खरेळक, G2 क्रमेळक ( for खरेडक ) In Ś1, the portion from गवां up to केचिच्छैलाम्बुद ( in $28^{a}$ ) is written in Devanāgarī S ( T3 missing ) अपि ( for तथा ) —$^{c}$) Ś1 D 3 11 T4 G1 वपूंष्येने, K3 वपूंपाते (sic), D3 चापुंष्यन्ये (sic), G3 वपुष्येते ( for वपूं ष्यन्ये ) —$^{d}$) G3 दिव्य ( for the second तत्र ) D3 न्यधारयन

28 T3 missing ( cf v l 17 ) —$^{a}$) B1 M1 शैलायुध, T4 शल्यायुद —$^{b}$) B Dn D2–10 T4 चक्रो द्यत, D1 हस्तोद्यत, T1 ° चक्राकारा ( for °लात ) D3 °करायुधा, T4 गदायुधे D1 चक्रालातहलायुधा —$^{c}$) Dn पुञ्जाभा ( for पुञ्जाभा ) — K3 transp $28^{d}$ and $29^{a}$

29 T3 missing ( cf v l 17 ) K3 transp $28^{d}$ and $29^{a}$ B3 damaged for 29–32 —$^{a}$) K3 S ( T3 missing ) [अ]पि ( for [त्]त्र ) —$^{cd}$) D2 3 11 T2 4 G च ( for ऽथ ) T1 2 M transp मरुत and वसव G3 मरुत ( for वसव )

30 T3 missing ( cf v l 17 ) B3 damaged —$^{a}$) D3 साध्या, T ( T3 missing ) G M1 2 4 यक्षा, M3 युक्ता ( for सिद्धा ) —$^{b}$) K2 corrupt Dn2 D3, 7–9 T1 G भुजगा K4 तथा ( for खगा ) D3 सिद्धा भुजगदानवा, M1. 2 4 गन्धर्वाः किंनरा —$^{c}$) G3 स्वयं भुर्, Ca °भूर् ( as in text ) —$^{d}$) K4 असुना (sic) ( for सपुत्र ) D3 सुतुरो विष्णुना सह, M1 सप्रास स्वयं विष्णुना

31 T3 missing ( cf v l 17 ) B3 damaged —$^{a}$) K2 corrupt B5 G1. 3 तदा, M1 3 स्वयं ( for तथा ) T4 शक्रोभ्ययाद्द्रष्टुकाम —$^{b}$) Ś1 K1 उत्तम B4 D5 अद्भुत ( for अच्युतम् ) T1 2 M कुमारममरप्रभ ( M2 4 °भुं ), T4 ममितौजस, G °ममितप्रभ —$^{c}$) Dn1 T ( T3 missing ) G M1 [ए]व ( for [अ]पि )

32 T3 missing ( cf v l 17 ) B3 damaged D2 reads $32^{cd}$ on marg —$^{c}$) D11 ऋतवो, G3 ऋषभा ( for ऋभवो ) Ś1 K1–3 वा ( K2 3 वै ) रुद्रा ( for वरदा ) B ( B3 damaged ) Dn D1–10 पितरो ( D1 ऋभवो ) जगत ( B1 °ता ) श्रेष्ठा ( B5 सिद्धा ), T4 ऋषयो नाम च पुरा —$^{f}$) K3 यमो धाता, D1 2 यातुधानाश्, D6 व्योमा धामाश्, D10 G2 यामा यामाश्, D11 यामधामाश्, T1 2 व्योमयाना, T4 G3 यमाया( G3 °मा )श्च, M1 यामास्तामाश् Ca यामा धामाश् ( as in text ) T1 2 G1 सहस्रश

33 T3 missing ( cf v l 17 ) —$^{a}$) D3 बालो K4 B ( except B3 ) D ( except D2 3 7 11 ) बलवान् ( for भग ) —$^{b}$) D3 8 11 समन्वित ( for बला° ) —$^{d}$) D2 शूलहस्तं

34 T3 missing ( cf v l 17 ) B3 damaged —$^{a}$) T4 G1 3 तथा ( for तम् ) M1 आव्रजंतम् ( for आव्रजन्तम् ) K2 T4 G1 3 M2–4 आलोक्य, K3 आलम्ब्य ( for क्ष्य ) —$^{b}$) G2 मनोहतं ( for गतम् ) — K3 om ( hapl ) $34^{c}$–$35^{d}$ Dn1 repeats $34^{cd}$ after 35

35 T3 missing ( cf v l 17 ) K3 om 35 ( cf v l 34 ) —$^{a}$) K3 corrupt Ś1 K1 को, K4 B Dn D1–3 7–11 T1 G3 कं ( for किं ) D3 8 10 T1 तु ( for नु ) D2 बालो —$^{b}$) K4 D1 3 5 6 11 M1 अभ्युपे ष्यति, D2 °पेयुपि, T ( T3 missing ) G पै( G1 3 पे, G2 °दे )ति च, M2–4 पैति मा ( for °पैष्यति ) —$^{c}$)

